Gaekwad's Oriental Series
Published under the Authority
of the Maharaja Sayajirao
University of Baroda, Baroda

General Editor :
J. P. Thaker,
Director, Oriental Institute,
Baroda

No. 170




श्रीमद्भास्कररायप्रणीतः

# तृचभास्करः ।

Gaekwad's Oriental Series
Published under the Authority
of the Maharaja Sayajirao
University of Baroda, Baroda

General Editor :
J. P. Thaker,
Director, Oriental Institute,
Baroda

No. 170




श्रीमद्भास्कररायप्रणीतः

# तृचभास्करः ।

# TṚCABHĀSKARA

by

## BHĀSKARARĀYA

Edited by

The Late Shri R. G. Sathe,

BARODA




Oriental Institute

Baroda

1982

Copies : 500
First Edition : 1982

Price Rs. : 53/-

*Copies can be had from :—*

*The Manager,*
UNIVERSITY PUBLICATIONS SALES UNIT,
M. S. University of Baroda Press ( Sadhana Press ),
Near Palace Gate, Palace Road, Baroda-390 001.

Printed by Shri Bansilal M. Shah, Manager, Maharaja Sayajirao University of Baroda Press ( Sadhana Press ), near Palace Gate, Palace Road, Baroda and published by Shri J. P. Thaker, Director, Oriental Institute, Maharaja Sayajirao University of Baroda, Baroda-2, March, 1982.

## Foreword

I am extremely happy to put in the hands of scholars an authentic and most useful tantric work *Ṭṛcabhāskara* of Bhāskararāyamakhīndra, a versatile scholar and an unchallengeable authority on the *Tantraśāstra*, who has written as many as three dozen works ( Catalogus Catalogorum enlists 28 + 4 + 3 works ) Unfortunately, only very few of them have been published. *Ṭṛcabhāskara* is one such unpublished and important work.

Bhāskararāya himself mentions at the end of this work ( p. 148 ) that he was attacked by many diseases, having been affected by constant wandering in different parts of the country. The use of several costly medicines for a long period of three years could not help restore his health. He then took refuge to the Sun, the bestower of health, who inspired him to offer *arghyas* to Him with the repetition of *tṛca* ( Triplet ) of the *Ṛgveda* ( I. 50. 11-13 ). He tried it and to everyone's surprise he was cured of all his ailments on the tenth day. Astonished by the healing power of these *ṛks*, he prepared ( for the benefit of the suffering community at large ) a regular *paddhati* ( method ) of this ritual under the name *Ṭṛcabhāskara.*

The work was composed 273 years ago in Śaka 1630 ( 1708 A.D. ), but not published so far, perhaps owing to the secrecy so highly valued by the *Tāntrikas.* Fortunately, the late Shri Raghunatharao G. Sathe ( of Baroda ), a profound scholar in the *Tantraśāstra* in the spiritual line of Śrī Bhāskarācārya himself, kindly undertook the task of editing the text of *Ṭṛcabhāskara* for the G.O. Series. He secured a MS. from Shri Batuknath Shastri Khiste ( from Varanasi ), son of the illustrious scholar Shri Narayan Shastri Khiste; and the other one from Shri Kumarila Shukla ( of Baroda ), son of the versatile scholar and great *Tāntrika*, Pt. Harishankar O. Shastri. With the help of these two MSS. and one from our collection ( which he used to fill up the lacunae ) he prepared a consolidated text. An octogenarian, he pushed himself hard in preparing a press-copy of the MS, copied by him and was very eager to see the work in print. But, undue delay in printing due to circumstances beyond control, prevented his desire from being fulfilled. We deeply lament his demise on 1-9-1980, and hope his spirit will be gratified by the eventual publication of this work. My warmest thanks are due to the departed soul.

I gratefully acknowledge the help of my friend Pt. Batuknath Shastri Khiste, Retired Head, Dept. of Sāhitya, Vārāṇaseya Sanskrit Viśvavidyālaya, Varanasi and a *Tāntrika* in the spiritual lineage of Śrī Bhāskararāya, for complying with my request to write an introduction giving a life-sketch and personal details of Śrī Bhāskararāya for the present volume.

I also thank my colleague Shri S. Y. Wakankar, Research Officer, for carefully going through the press-copy and the proofs.

I thank the U.G.C. and the M. S. University of Baroda for financial help towards the publication of this work.

My thanks are also as always due to Shri B. M. Shah, Manager, M. S. University Press and his staff for their co-operation and personal care in the printing of this work.

ORIENTAL INSTITUTE,
BARODA : 28-11-1981.

A. N. JANI
Director

— ——

# विषयानुक्रमः

---

# प्रस्तावना

॥ श्रीगुरुगणेश ॥

श्रीमद्भास्कररायभारतीदीक्षितश्रीचरणानां संक्षिप्तमितिवृत्तम् ।

स्वोपासनासिद्धिरहस्यसत्संप्रदायप्रथनाय नूनम् ।
आविर्भवन्ती गुरुभास्कराख्या पायादपायात्परदेवता नः ॥

अस्मिन् भारतवर्षे भगवद्विभूतिरूपेण महापुरुषाणां समये समये प्रादुर्भावो भवतीति शास्त्रज्ञानामास्तिकानामाश्वासो जागर्ति ।

"परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥"

इति भगवदुक्तिः प्रमाणयति तादृशमहापुरुषाणामाविर्भावस्य भगवदवतारत्वम् । तत्र शिष्टजनानुग्रहदुष्टनिग्रह-धर्मसंस्थापनानि च प्रायो हेतुभूतानीति तथाविधपुरुषाणां चरित्रपर्यालोचनयैवाऽनुभूयते ।

कालवशाद् धर्ममार्गे शैथिल्यमापन्ने तद्दृढीकरणाय तादृशाः परमेश्वरप्रेरणया भुवमवतरन्ति महापुरुषा इत्येषा भारतवर्षस्य महती परंपरा जागर्ति । नास्तिकवादसंतमसाऽऽच्छादिते वैदिकधर्ममार्गे पुरा भगवत्पादाः श्रीशङ्कराचार्या गृहीतवपुषः सर्वतः पर्यटनं विधाय, परिपन्थिनश्च निगृह्य, धर्मसेतुमामूलतो दृढतरं चक्रुः । आचार्यचरणानामवतारकालः स्वल्प एवाऽऽसीत् । "द्वात्रिंशे मुनिरभ्यगात्" इति प्रसिद्ध्या तावन्मात्रेणाप्यायुषा महनीयं धर्मसंस्थापनं तैर्विहितमेव । तदनु तेषामेवाऽवशिष्टं कार्यजातं तदीयपरंपरासमुद्भूतैः श्रीविद्यारण्यस्वामि-श्रीमदप्पयदीक्षित-श्रीमद्भास्कररायचरणैः स्वकर्तव्यानुरोधेन पूरितमिति सांप्रदायिका मन्यन्ते । श्रीमद्भास्कररायचरणैस्तु विशिष्य श्रीशङ्करभगवत्पादानामुपासनासंप्रदायस्य पुनरुज्जीवनं परिष्करणं च कृतमिति तेषामसाधारणग्रन्थलेखनपरंपरया परिचेतुं शक्यम् ।

प्रस्तुतेऽत्र प्रास्ताविके तेषां यथोपलब्धं यथाश्रुतं च जीवनवृत्तं संक्षेपेणैव विलिख्यते । 'तृचभास्कर' ग्रन्थेन सह तेषां परिचयोऽपि जिज्ञासूनामुपकारको भवेदित्ययस्माकं स्वल्पतरः प्रयासः । संभवन्त्यस्त्रुटयोऽप्यत्र विद्वद्भिर्मर्षणीयाः, समुचितसूचनाप्रदानैरुद्धरणीयाश्चेति तान् प्रार्थयामहे ।

श्रीमद्भास्कररायचरणानां पितृचरणा दक्षिणदेशस्थितकर्णाटकप्रदेशवर्ति-बीजापुर-राजधान्यां यवनराजस्य सचिवा आसन् । तेषां 'गम्भीरराय दीक्षित' इत्यभिधानमासीत् । कदाचित्तेषां महाभारतप्रवचनं शृण्वतो गुणग्राहिलस्य यवनराजस्य मनसि तादृशग्रन्थस्य यावन्यां भाषायामपि रूपान्तरं भवत्विति बलवानभिलाषः समुद्भूत् । यवनराजेन संप्रार्थिताः श्रीगम्भीर-रायदीक्षितास्तदीयभाषया सर्वमपि महाभारतं न्यबध्नन् । ततःप्रभृति तेषां 'भारती' त्युपनाम प्रवृत्तिं लेभे । तदिदं वृत्तं श्रीभास्कररायैः स्वीये छन्दःकौस्तुभे समुल्लिखितं वर्तते । श्रीगम्भीर-रायदीक्षिताः कृताग्निष्टोमाः सर्वशास्त्रनिष्णाता नानाविधग्रन्थनिर्माणकर्मठा राजनीतिकुशलाश्च समभूवन् । तैः स्वकीये श्लोकात्मकविष्णुसहस्रनामपद्यप्रसूनाञ्जलिनिबन्धे स्ववंशपरिचयः समु-पन्यस्तः । तेनेयं परंपरा ज्ञायते । विश्वामित्रगोत्रीय एकनाथो मूलपुरुषः, तत्पुत्रः पण्डितस्तुक-देवः, तस्य सूनुश्च यमाजिपण्डितनामा समजनि । यमाजिपण्डितस्य भार्या चन्द्रमाम्बाऽऽख्याऽऽ-सीत् । अनयोः सुतः श्रीगम्भीररायभारतीदीक्षितोऽभवत् । श्रीगम्भीररायो भागवतसंप्रदायवंश्योऽपि श्रीवत्सगोत्रसम्भूताद् बीजापुरराजवैद्यमुद्गलभट्टवंश्यादागमाचार्यान्नारायणनामकान्निजमातुलात् सकलमागमशास्त्रं जग्राह । राजकार्यवशाद् गम्भीररायः प्रायो बहुषु स्थानेषु भ्रमति स्म । गम्भीररायस्य भार्या शीलसंपन्ना कोणाम्बिकाऽभिधानाऽऽसीत् । दम्पत्योरनयोः प्रथममपत्यं 'नारायणनामा' सुत आसीत् । कृतोपनयनस्याऽपि तस्य विद्याभ्यासे न तादृशी बुद्धिरुद्भूत् , यथा पित्रा सयत्नमध्यापितोऽपि न स प्रवर्तते स्म विषयग्रहणाय । एतेन दम्पत्योः किञ्चि-दासीन्मनसि दुःखमिव कुलानुरूपसन्तानलाभाय । अथ गच्छता कालेन गम्भीरराये यात्रार्थ-मुपयाते तद्गृहमुपेतः कश्चन सिद्धपुरुषः कोणाम्बिकया सत्कृतः पृष्टश्च सन्तानविषये, 'पुत्रस्ते विशिष्टगुणशाली तेजस्वी च भविते' त्याशीर्वचनमाभाष्य यथेष्टदेशं जगाम । श्रीमती कोणाम्बिका योग्यसन्तानलाभाय भगवन्तं भुवनदीपकं भास्करमाराधयति स्म । अथ कार्य-वशाद्भाग्यपुरमुपयाते सकुटुम्बे श्रीगम्भीरराये तत्रैव समुहूर्ते प्राचीदिग्बालभास्करमिव श्रीभास्करं प्रासूत कोणाम्बिका । ततःप्रभृति भास्करप्रसादलब्धस्य शिशोः 'भास्कर' इत्येवाभिधानं लब्धप्रतिष्ठमासीत् । बीजापुराधीशोऽपि गम्भीररायस्य सुतलाभेन प्रहृष्टस्तं स्वनगरमागन्तुमादि-देश, समागतञ्च तं बहुविधोपायनादिना सत्कृतवान् ।

अस्य शिशोः प्रथमत एव प्रतिभाविकासाय श्रीगम्भीररायेण सारस्वतकल्पोक्तप्रकारेण समन्त्रकं संविल्लतामभिषिच्य प्रत्यहं तज्जलांशप्रदानेन भास्करः कृतसंस्कारो विद्याग्रहणे प्रवर्तितोऽभूत् । एकहायन एव भास्करश्चतुरमधुरवचनैः शृण्वतां मनांसि जहार ।

अथ तीर्थयात्राप्रसङ्गतो विश्वेश्वरस्य नगरीं वाराणसीमागते श्रीगम्भीरराये, तत्र च प्रत्यहं पण्डितजनैः सह प्रवृत्ते शास्त्रीयवाग्विनोदे समुपस्थितो बालो भास्करः सुभाषितमुखरः सर्वेषा-मन्तरमङ्गमावर्जयामास । अथ तत्रैव विद्वज्जनानुरोधेन गर्भात्पञ्चमाब्द एव भास्करो मौञ्जी-

बन्धनं ग्राहितो वेदाभ्यासाय प्रवर्तते स्म । तदानीमेव तत्रोपस्थितः कश्चिद्यतिवरः सहासमभाषत 'शिशो ! तव सद्यो विवाहार्थमिदमुपनयनं कृतमिति प्रतीयते' इति । तदाकर्ण्य प्रत्युत्पन्नमतिर्भास्करोऽप्यब्रूत 'भो यतिराज, मधुरभिक्षालाभार्थं किं न बहवः शीघ्रं सन्यस्यन्ति' इति । इत्येवं शिशोरस्य प्रखरबुद्धिमालोक्य विस्मिताः सर्वे । एवं प्रयाते काले बीजापुरस्थिते गम्भीररायेे कदाचित् कार्यवशात्तेनैव मार्गेण गच्छन्तः सकलशास्त्रपारावारपारीणा नारायणपेठनगरसमीपस्थ-लोकापल्लीग्रामनिवासिनो नृसिंहयज्वनामानः पण्डितवरा गृहमुपेताः श्रीगम्भीररायेण यथोचितकृतपूजनास्तत्रैव समीपे वेदाभ्यास-परायणस्य शिशोर्भास्करस्य वाचं श्रुत्वा भाविनः प्रतिभासंपन्नस्याऽस्य लक्षणानि च दृष्ट्वा भृशं प्रसन्नाः समजायन्त । अस्य शिशोरध्यापने स्वयमेव तैः स्वाभिलाषः प्रकटीकृतः । ततःप्रभृति श्रीभास्कररायः सद्गुरुपुत्रेण श्रीस्वामिशास्त्रिनामधेयेन गुरोश्चरणयोराराधनं कुर्वाणः शास्त्राणि पठितुं प्रावर्तत । कतिपयैरेव वर्षैः प्रतिभाप्रकर्षेण सर्वा विद्याः कलाश्च करतलामलकवत् वशीचकार । श्रीगुरोः प्रसादादष्टादशविद्यास्वप्रतिहता गतिरभूद्भास्कररायस्य । सौभाग्यभास्करे तदिदमुक्तं "विद्याष्टादशकस्य मर्मभिदभूद् यः श्रीनृसिंहाद्गुरोः' इति । श्रीभास्कररायैरन्येभ्योऽपि विद्वद्भ्यः किंचिदधीतं, तथापि साकल्येन तदीयमध्ययनं श्रीनृसिंहयज्वसकाशादेव सञ्जातमिति प्रतीयते । श्रीगङ्गाधरवाजपेयिनाम्नो विद्वद्वरान्न्यायशास्त्रं तैरधीतमिति श्रूयते ।

एवमतीतेषु षट्सु हायनेषु विद्यासंपन्नं तनयं ज्ञात्वा श्रीगम्भीररायो गुरोः सकाशे पत्रप्रेषणेन भास्करं विवाहार्थमाकारयामास । तत्रैव किञ्चित्कालं निवसतः श्रीभास्कररायस्य महाविदुषः श्रीरुक्मण्णापण्डितस्य सविधे छन्दःशास्त्रस्यालङ्कारशास्त्रस्य चाभ्यासो जातः । अथ पुनर्नृसिंहगुरोरन्तिकमुपेत्य श्रीभास्करः केषांचिदवशिष्टानाम् आयुर्वेदधनुर्वेदप्रभृति विषयाणामध्ययनं वर्षमात्रेण सम्पादयामास । एवमाषोडशाब्दं वयस्येव विद्यया, वपुषा, तेजसा च संपन्नो भास्करो मध्याह्नभास्कर इव दिदीपे ।

अथ विद्यासंपन्नं सुतमानेतुं स्वयमेव सपरिकरो गम्भीररायो नृसिंहयज्वनो गृहमुपेत्य नानाविधवसुवसनाभरणादिभिरुपहारैः सत्कृत्य पुत्रस्य गृहगमनानुज्ञां प्रार्थयते स्म । गुरुणाऽपि सप्रमोदं साशीर्वचनं प्रेषितो भास्करः सुशीलया पत्न्या सह गार्हस्थ्यमनुपालयन् स्वगृहनिवासमारेभे । पितुरपि मनसि तनयोपरि राजकार्यभारं निक्षिप्य विश्रामाभिलाषः समुदेति स्म । पित्रा च पूर्वमेव राजकार्येषु नानाविधेषु नैपुण्यमवापितोऽभूद्भास्कररायः ।

तदैव कार्यवशाद् गम्भीररायो भास्कररायेण राजसेवकसमुदायेन च सह यात्रायां प्रवर्तमानो प्रच्छायशीतले स्थले मध्येमार्गं विश्राममनुभवति स्म । तत्रैव नातिदूरे कस्यचन महात्मनः शिवभक्तस्याऽऽसीदाश्रमः । स च यदृच्छया बहिरागतः पर्यटन् सहसैव श्रीगम्भीररायभास्कररायसहितं जनसमुदायं हस्त्यश्वादिकमपि शिवतेजोमयं ददर्श । तेन च चमत्कृतान्तः-

करणः स योगी समाधिबलेन ज्ञातवान् `यदत्र सन्निहितः श्रीभास्कररायः शिवस्य षष्ठी मूर्तिः सूर्य एव साक्षादस्तीति। अथ रहसि समुपसृत्य स गम्भीररायं तद्रहस्यमबोधयत्। राजकार्यादिषु भास्कररायो न योजनीयः, सोऽयं लोकोत्तरो महानुभावो धर्मकार्यार्थमवतीर्णः स्वेच्छयैव यथा प्रवर्तेत तथाऽनुमन्तव्य ' इत्यपि समसूचयत्।

ततःप्रभृति गृहमुपेतस्य श्रीभास्कररायस्य स्वकार्यानुकूला प्रवृत्तिः पित्राऽप्यनुमता प्रवर्तते स्म। प्रत्यहं विद्वद्भिः शास्त्रचर्चा, ग्रन्थानामनुशीलनं, विविधधार्मिककार्योपायचिन्तनानि च प्रवृत्तान्यभूवन्। सिद्धादेशानुसारश्च श्रीशङ्करभगवत्पादसदृशी भूमण्डले परिभ्रमणप्रवृत्तिः धर्मकार्यसम्पादनतत्परता च श्रीभास्कररायो लब्धोदया ददृशे। ततश्च यात्रोचितसम्भारान् सङ्गृह्य सपरिकरः श्रीभास्कररायो गृहान्निरगात्। अथ यात्रायां प्रथमं प्रतिष्ठानपुरमुपेतो भास्करस्तत्रत्यैर्विद्वज्जनैः कृताभ्यर्हणो शास्त्रचर्चया, धर्मचर्चया च किञ्चित्कालमत्यवाहयत्। ब्राह्मणानां शाखाभेदमूलकविरोधञ्च न्यवारयत्। अथैकदा तत्रोपस्थितेन केनाऽपि विदुषा राजकीयाधिकारिणा च श्रीभास्कररायस्य वैशिष्ट्यं परीक्षमाणेन रहसि मन्त्रशास्त्रविषये पृष्टो भास्करः श्रीगुरोर्नृसिंहयज्वनामधेयात् स्वकीयां मन्त्रोपासनप्रवृत्तिमभ्यधात्, परं तत्र विषये पूर्णाधिकारदीक्षादिकं नोपलब्धमिति ज्ञात्वा स पुरुषः श्रीभास्करं तथाविधपूर्णदीक्षाग्रहणविषये प्रेरयामास। तदानीं गुर्जरप्रदेशस्थसुरतनगरवासिनामुपासकशिरोमणीनां श्रीशिवदत्तशुक्लमहाभागानां परिचयमुपवर्ण्य तन्निकटे गन्तुं, तेभ्यश्च सम्पूर्णां विद्यामधिगन्तुं प्रेरयामास। अथ तदैव कृतदृढसङ्कल्पः श्रीभास्कररायः स्वयमेकाकी एव गुरोर्नगरीमुद्दिश्य पद्भ्यामेव प्राचलत्। अथ यथाकालं सुरतनगरमनुप्राप्तः श्रीभास्करः शिवदत्तशुक्लमहाभागस्य निवासस्थानमासाद्य, तं महाभागं स्तोत्रपाठादिव्यासक्तं दृष्ट्वा सभक्ति प्रणनाम। तेन च परिचयादिकं पृष्टः स्वात्मनो ब्राह्मणतां निवेद्य तद्गृहे यथाकामं कामपि सेवावृत्तिं विधातुमात्मनोऽभिलाषं न्यवेदयत्। महात्मना तेनाऽनुमतः श्रीभास्करः साधारणः सेवक इव कार्याणि कर्तुमारेभे। विशेषतश्च ब्राह्मणतया पूजोपकरणसम्मार्जनादीनि कार्याणि विधत्ते स्म। अन्यान्यपि सर्वाणि कार्याणि परमभक्त्या सोऽयं कर्तुं सन्नद्ध एव सर्वदा बभूव। एवं प्रवृत्ते सेवामये तपसि श्रीभास्करस्य तेजस्वितां चतुरतां च परीक्षमाणा श्रीशिवदत्तशुक्लमहाभागस्य कन्या कदाचन पितरमेवमवबोधयत्— 'यदयं ब्राह्मणः प्रत्यहं सेवासंलग्नो न साधारणः पुरुषः किन्तु प्रच्छन्नः कश्चन परमचतुरः पण्डितश्च प्रतिभाति' इति। एवं शृण्वतोऽपि शिवदत्तमहाभागस्य नित्यनैमित्तिकोपासनाशास्त्राध्यापनव्यासक्तस्य नाऽभवदवसरो भास्करविषये किमपि प्रष्टुं विचारयितुं वा।

तस्मिन् समये केचन वावदूकाः पण्डिता दिल्लीसम्राजोऽपि लब्धप्रशस्तयः स्थाने स्थाने परिभ्रमन्तो विजिगीषानुरागिणः सुरतनगरमाययुः। तत्रागमनानन्तरं तैः स्ववादानुरागे

प्रकटिते राजकीयाधिकारिभिर्विद्यावयोवृद्धतया श्रीशिवदत्तशुक्लमहोदयास्तेषां समाधानार्थमाहूताः। परं शान्तस्वभावतया नित्योपासननिरततया च न ते तत्र जग्मुः, प्रत्युत पण्डिता एव तेषां गृहमाजग्मुः,। तत्रैकः शब्दशास्त्रपटुः, द्वितीयः शब्दतर्कपटुः, तृतीयश्च शब्दतर्कमीमांसाकुशलः, चतुर्थः पुनः सर्वेष्वपि शास्त्रेषु निपुणो विशेषतो वेदान्तपटुश्चाऽऽसीत्। अथ तत्र प्रवृत्तायां शास्त्रचर्चायां श्रीशिवदत्तमहाभागैः पूर्वोक्तानां त्रयाणामपि पण्डितानां पूर्वपक्षाः समाहिताः। तदनु चतुर्थे पण्डिते वादाय समुद्यते मध्य एव श्रीभास्कररायैरुत्थाय सविनयं गुरवः प्रार्थिताः यत् 'इमे महानुभावा वेदान्तनिपुणा अपि व्यावहारिकाः सन्ति। अहमप्येतादृश एवास्मि। समानगुणयोरेव वादः शोभते। भवन्तस्तु देहाभिमानरहिता महात्मानो नैवंविधैः सह वादे समुपयुज्यन्ते' इति। अथ तयोस्तत्र वादकथायां प्रवृत्तायां श्रीभास्कररायैः स वेदान्ती प्रखरतरतर्कप्रमाणोपन्यासैः पराजितः। अथ तेषां विषये विशेषजिज्ञासया श्रीभास्कररायास्तदीयमावासस्थलं गताः प्रलम्बिपटान्तरितं किमपि प्रतिष्ठापितघटाद्याकारं वस्तु आकलयांचक्रुः। नूनमेतैः स्वविजयार्थं किमपि कृत्यमिदं कृतमित्यनुमाय तत्र स्खलन्त इव मूर्च्छाक्रान्ता इव पेतुः। तत्र तेषां निपततेन ते सर्वे ससंभ्रममेतेषां मूर्च्छाऽपनोदनाय चेष्टमानाः सावलम्बं व्यजनवीजनादिकं चक्रुः। परं तावत् तेषां भग्नमभूत्तदनुष्ठानम्। अथ तैर्गतश्रीकैः क्षमापनपुरःसरं पराजयशुल्करूपेण स्वीयान्यखिलानि जयपत्राणि श्रीभास्कररायेभ्यो दत्तानि। तैश्च स्वगुरुवराणां सविधे तान्युपस्थापितानि। परं सहजदयोदारहृदयाः श्रीशिवदत्तशुक्लमहाभागास्तेभ्यः पण्डितेभ्यः सह दक्षिणया तानि जयपत्राणि प्रत्यर्पयाञ्चक्रुः प्रशशंसुश्च श्रीभास्कररायस्य वैदुष्यं चातुर्यञ्च। अस्मिन्नेव काले वल्लभसम्प्रदायाचार्यस्य कस्याऽपि तत्रागतस्य प्रस्तुते वादाहवे श्रीभास्कररायेण स पराजितो जर्जरीकृतधैर्यश्चाऽभवदिति प्रसिद्धिर्जागर्ति।

अथैवंविधाद्भुतगुणशालिनं भास्कररायं ज्ञात्वा नितान्तप्रहृष्टस्वान्ताः श्रीशिवदत्तशुक्लमहोदयाः सस्नेहादरं तदीयं तादृशसेवाव्रतादिकं किमर्थमिति पप्रच्छुः। श्रीभास्कररायैरपि गुरुप्रसादपूर्वकं पूर्णदीक्षालाभार्थं निजागमनं गुरुगृहसेवनादिकं च सर्वं निवेदितम्।

अथ यथोचिते काले श्रीशिवदत्तशुक्लमहाभागैः प्रसन्नान्तःकरणैः ससन्नाहं पूर्णदीक्षाऽनुग्रहप्रदानेन श्रीभास्कररायाः सफलीकृताः सुतनिर्विशेषं चाङ्गीकृताश्च परां प्रमोदकाष्ठामन्वभवन्।

कञ्चन समयं गुरुसन्निधौ वसन्तः श्रीभास्कररायाः श्रीगुरोरनुज्ञया गुरुपत्न्याश्चानुमत्या गृहं गन्तुं तत्परा अभवन्। गुरुणा ससम्भारं विसृष्टाश्च यथाकालं निजावासमवापुः।

अथ वर्षासु व्यतीतासु शुभे काले सपत्नीकाः सपरिकराश्च श्रीभास्कररायाः बीजापुरतो दिग्विजययात्रायै प्रातिष्ठन्त। प्रथमश्च विश्रामस्तेषां भद्रावत्यपराभिधाने भाळकी नगरे

समभूत् । इयं पुराणप्रसिद्धा यौवनाश्वस्य राजधान्यासीत् । भालकीपुराधीशः ‘चन्द्रसेन-जाधव’ नामा तदानीं कस्यापि यवनस्य मन्त्रविद्यया वशीकृतमतिरिव वर्तमान आसीत् । स च कतिपयैरहोभिस्तस्य यवनधर्मप्रवेशं चिकीर्षुः साधुस्तत्र न्यवसत् । अस्मात्सङ्कटात् स्वभर्तारं मोचयितुं व्याकुलीभूता तदीया पत्नी श्रीभास्कररायस्य प्रभावं शृण्वती तं शरणमुपययौ । श्रीभास्कररायैरपि शीघ्रमेव समुचितेनोपचारेण राज्ञो दोषः सम्मार्जितः, स च यवनहतकः समुच्चाटितः सत्वरमेवाऽपासरत् । एवंविधेनाऽनुग्रहेण समुपचितभक्तिभराभ्यां ताभ्यां सत्कृताः सेविताश्च तत्रैव कञ्चित् कालं श्रीभास्कररायाः कृतवसतय आसन् । चन्द्रसेनो मन्त्रोपदेशेनानुगृहीतश्चिरं जजाप श्रद्धया विधाम् । एवं गच्छति काले चन्द्रसेनस्य राज्ञो निरतिशयां भक्तिं गुरुसेवाञ्चानुसन्धाय कृपालुभिः श्रीगुरुभिः सपत्नीकाय तस्मै पूर्णाभिषेकदीक्षाऽपि प्रादायि ।

ततः परं श्रीभास्कररायैः सोमपूर्वकमग्न्याधानं सम्पादितम् । एवं यज्ञादिकं कुर्वाणाः परदेवतोपासनतत्पराः शास्त्रचर्चाग्रन्थप्रणयादिपरायणाः श्रीभास्कररायाः दक्षिणदिग्यात्रायै प्रवृत्तिं विदधिरे । कावेरीतटे तत्रत्येन भूपतिना प्रदत्तेऽग्रहारे भास्करपुराभिधे श्रीभास्करेश्वरं नाम शिवं प्रतिष्ठाप्य तत्पूजनादिव्यवस्था कृता । तत्रापि कृतनिवासा भास्कररायाः पुरतो रामेश्वरदिदृक्षया प्रचलन्तो मध्येमार्गमापतितानि कुम्भकोण-पक्षितीर्थ-पाषाणतीर्थप्रभृतीनि स्थानानि साक्षात्कुर्वाणा देवताऽभ्यर्चनविद्वत्सत्कारशास्त्रव्याख्यानादीनि सम्पादयन्तो विचेरुः ।

अत्रान्तरे समागतेन सन्देशेन पितुः स्वर्गगमनं मातुश्च तदनुगमनं विज्ञाय भृशं पीडितान्तःकरणा अपि शास्त्रैकशरणाः श्रीभास्कररायमहाभागाः शास्त्रानुमोदितं सकलमपि पैतृकं कृत्यं सम्पादयामासुः । ततश्च भगवन्तं रामेश्वरमभ्यर्च्य समागतेषु योग्येषु विद्योपदेशं कुर्वाणा विद्वज्जनैः शास्त्रानुरक्तैरहर्निशमुपास्यमाना मधुरानगरीमागत्य मीनाक्षीं सुन्दरेश्वरं चाप्यपूजयन् ।

एवं पद्मनाभादिस्थलान्यालोकयन्तः क्रमशः श्रीभास्कररायचरणा जगद्गुरोः शृङ्गेरीपीठमुपाजग्मुः । तदा खलु शृङ्गेरीपीठे श्रीपुरुषोत्तमभारतीनामधेया आचार्याः प्रतिष्ठिता आसन् । ते तपस्विनो वर्षीयांसश्च आसन् । तत्रोपेत्य सोपायनं विहितदण्डवत्प्रणतयः श्रीभास्कररायाः स्वपितुरात्मनश्च परिचयं, श्रीगुरोर्विद्याग्रहणादिकं, धर्मकार्यार्थमात्मनो यात्राप्रवृत्तिं चेत्यखिलवृत्तं सविनयं निवेदयामासुः, अकथयंश्च “यदेतद्धर्मकार्यं मया क्रियते तत्सर्वं जगद्गुरुपरम्परा-संरक्षणार्थमेव न त्वात्मनो विजिगीषादिप्रवृत्त्या । अथ यदि किञ्चिदनुचितं मदीयाचरणं भवेत्तदा श्रीचरणैरेवानुशासनीयोऽस्मि नाऽपरेण केनापीति ।”

एवं श्रीभास्कररायाणां भक्तिमादरं च दृष्ट्वा परितुष्टाऽन्तःकरणाः स्वामिचरणास्तेषां कार्यजातं प्रशंसन्तस्तेभ्य आशीर्वचनानि दत्त्वा, मठप्रतिनिधिभूततया सञ्चाराय छत्रचामर-दण्डादि चिह्नान्यपि सह नेतुमन्वमन्यन्त, प्रशशंसुश्च तेषामध्यवसायम् ।

शृङ्गेरीतः प्रस्थाय प्रतीच्या दिशा पर्यटन्तो मध्ये गोकर्णमहाबलेश्वरं करवीरस्थां भगवतीं महालक्ष्मीं च समर्चयन्तो भास्कररायाः कोल्हापुराधिपतिना छत्रपतिना गुरुभावेनाभ्यार्चिता बभूवुः। ततोऽग्रे भार्गवरामक्षेत्रं कृष्णानद्या उद्गमस्थानं, विराट्पुरं, भीमाशङ्करं, मयूरपुरीं, पञ्चवटीं चावलोकयन्तः पेशवाभूपालाधिष्ठितं पुण्यपत्तनं नाम नगरं प्रापुः। श्रीभास्कररायागमनमाकर्ण्य पेशवानृपतिः सपरिकरो नगराद्बहिरुपेत्य सविनयमुपायनपाणिस्तदीयसत्कारमन्वतिष्ठत्।

अथैवमेवाऽग्रे देशाद्देशान्तरं व्रजन्तो गोदावरीतटेन सप्तशृङ्गीं घृष्णेश्वरं चावलोक्य बिडौजःपुरं ( बडोदा ) दृष्ट्वा सुरतनगरे गुरुसदनमभ्याजग्मुः। ज्ञातागमनवृत्तान्ताः श्री शिवदत्तशुक्लमहाभागाः प्रहर्षपूरितान्तःकरणा बहिरेव भास्कररायमालिङ्गितुमाययुः। परं भक्तिभरनमितशिरसो भास्कररायास्तु तरसा श्रीगुरोश्चरणयुगलं सविनयं प्रणेमुः। अथ प्रवृत्ते महत्युत्सवे श्रीभास्कररायैर्महार्हसम्भारेण सपरिवारस्य श्रीगुरोः सपर्याविधिः समपादि। गुरुपत्नी गुरुसुता च यथोचितसपर्यया परितोषिता।

तत्र कञ्चित्कालमुषित्वा ततः प्रचलन्तो यात्रायां द्वारकां सोमनाथं विलोक्य काश्मीरावधि पर्यटनं व्यधुः। तत्र विद्वद्भिः शास्त्रचर्चा शास्त्रार्थक्रमश्च भूयानासीत्। तेन च महती प्रशंसा समजायत। एवमेव क्रमेण उज्जयिन्यां महाकालमभ्यर्च्य हरिद्वार-गङ्गोत्तरी-बदरी-केदार-पशुपतिप्रभृतीनि स्थानान्यवलोक्य अयोध्यां, मथुरां, वाराणसीं च विलोकयन्तः क्रमेण कामाख्यापीठमाजग्मुः। अस्मिन् समये कामाख्यास्थले तान्त्रिकाणामासीन्महान् प्रभावः। सहसा न कोऽपि साधारणो जनो दर्शनं कर्तुमासीत्समर्थः। भास्कररायाणां परिकरोऽप्यवरुद्धस्तत्रत्यैर्मान्त्रिकैः। अथ भास्कररायैः स्वशिबिकैव केवला गन्तुमाज्ञप्ता व्योममार्गेण चलन्ती मन्दिरं प्रापत्। तदद्भुतं दृष्ट्वा गलितगर्वास्ते प्रणमन्तो भास्कररायसाहाय्यमकुर्वन् अपूजयंश्च यथोचितेन विधिना।

ततः परावर्तमानाः परळीस्थानं, तुळजाभवानीं दृष्ट्वा भगवतः पाण्डुरङ्गस्य स्थानमासाद्य तत्र पद्मपुराणीयं पाण्डुरङ्गमाहात्म्यं प्रकटीचक्रुः। स्वकुलदेवतायाः सन्नतिक्षेत्रस्थितायाः श्रीचन्द्रलाम्बादेवताया दर्शनमप्यकुर्वन्। श्रीभास्कररायैश्चन्द्रलाम्बाया मन्दिरं श्रीचक्राकारं विनिर्मितमस्ति। ततो नारायणपेठसमीपे स्वगुरोर्नृसिंहयज्वनः सदनमासाद्य तत्र गुरुपुत्रेण श्रीस्वामिशास्त्रिणा सह सङ्गत्य परमं प्रमोदमनुभवन्तो न्यवसन्। चिराद्द्वयोः सहाध्यायिनोः सौहार्दभरमेदुरः सहवासः समभूत्।

श्रीभास्कररायदीक्षितानामखिलेऽपि भारतवर्षे पर्यटनपरायणतया विविधा विद्वांसो राजानश्च शिष्याः समभूवन्। केचन शिष्यभूताः पण्डिताः सहैव ग्रन्थसम्भारेण पर्यटन्ति स्म। सर्वदैव शास्त्रचर्चा नूतनग्रन्थनिर्माणादिरूपः क्रमः प्रचलन्नासीत्। तेष्वेव "घनश्याम शास्त्री

जडे " इत्यभिधानाः शास्त्रेषु कुशलाः श्रीविद्योपासकाश्चाभूवन् । एते महानुभावा बडोदाऽधिपतिगायकवाडनृपतिभिस्तदीयमन्त्रसामर्थ्यशास्त्रीयपाण्डित्यादिना सम्मानिताः ' सायर ' नामकं नर्मदातटस्थं ग्रामं प्रदाय सन्निवेशिताश्चाभूवन् । श्रीगुरोराशीर्वचसा सप्तपुरुषावधि तदीयवंशे संपत्तिरुपासनाक्रमश्च प्रवर्तमान आसीत् । अस्यैव वंशस्य शाखा काश्यामपि कृतवसतिरजायत ।

अस्यैव जडेवंशीयस्य पुरुषस्य भूमिर्गोमान्तक प्रदेशे सप्तकोटीश्वरशिवक्षेत्रे स्थिताऽऽसीत् । तत्रैव निवासं कृत्वा श्रीभास्कररायचरणैर्नित्याषोडशिकार्णवस्य सेतुबन्धाभिधाना व्याख्या व्यरचीति तद्ग्रन्थान्तिमश्लोकैरवगम्यते ।

श्रीभास्कररायाणां तपःसामर्थ्यमनन्यसदृशमासीदित्यत्र विषये बहुतरं श्रूयते । काश्यामागमनप्रसङ्गे विद्वत्सभाया वृत्तान्तो निर्णयसागरीयललितासहस्रनामभूमिकायां निरूपितः प्रसिद्ध एवाऽस्ति । सिद्धदेहास्ते शिष्टाचारमनुपालयन्तोऽपि न कञ्चन शिरसा प्रणमन्ति स्म । परमेतावता स्वावमानं मन्वानैः पण्डितैः पृष्टास्ते सभायामुपस्थितस्य श्री स्वयंप्रकाशानन्दनाम्नो यतिवर्यस्य कमण्डलुं प्रणेमुः, प्रणामसमकालञ्च स कमण्डलुः शतधा व्यशीर्यत । ततःप्रभृति ज्ञाततदीयानुभावाः सर्वेऽपि जनास्तान् शिवावतारानेव मन्यन्ते स्म ।

नारायणपेठसन्निधौ स्वगुरुगृहे निवसतां भास्कररायाणां दिङ्मूलकूलंकषं सुयशः सर्वतः सम्मानता, राजोचितं च वैभवं सन्निहितमठाधिष्ठितस्य माध्वयतेर्महतीमीर्ष्यां जनयामास । वावदूकोऽसौ यतिर्वादकथायै एकद्वयधिकात्रिंशद्वर्षदेशीयवयसं श्रीभास्कररायमाजुहाव । ' पराजितपक्षेण जेत्रे तदीयाऽभिलाषाऽनुरूपं वस्तु प्रदास्यते ' इत्यभूत् पणः । अथ प्रवृत्ते वादाहवे श्रीभास्कररायेण पराजितः स मस्करी । प्रतिश्रुतानुसारं यतिना स्वानुजस्य कन्या विवाहविधिना श्रीभास्कररायेभ्योऽर्पिताऽभूत् । इयं च द्वितीया पत्नी श्रीभास्कररायाणां पार्वतीनाम्नी । प्रथमपत्न्या पद्मावत्या सह सस्नेहानुबन्धमियमपि गार्हस्थ्यधर्ममनुपालयन्ती रेमे । पद्मावत्याः पुत्रः पाण्डुरङ्गरायनामाऽभवत् । द्वितीयपत्न्याश्च कन्यकैका सञ्जाता नारायणपेठस्थित ' देव ' नामकवंशीयाय विदुषे प्रदत्ता । अद्यापि यद्वंशः प्रवर्तमान आस्ते ।

एवमलौकिकेन वैदुष्येण, तपसा, ग्रन्थनिर्माणपरम्परया, सत्सम्प्रदायप्रवर्तनेन, शिष्यजनानुग्रहेण च भूमण्डलं मण्डयन्तः श्रीभास्कररायचरणाश्चरमे वयसि मध्यार्जुनक्षेत्रे महाव्याप्तिरूपं शिवभावमाप्नुवन् ।

श्रीभास्कररायचरणैस्तत्र तत्र बहुविधेषु स्थानेषु भ्रमद्भिरेव ग्रन्थनिर्माणं नानाविधदेवमन्दिरस्थापनं च कृतमित्याभाति । तृचभास्करनिर्माणं १६३० शकाब्दे; ललितासहस्रनामभाष्यनिर्मितिः १६५० शकाब्दे; सेतुबन्धग्रन्थनं च १६५५ शकाब्दे सम्पन्नम् । ई. स. १७५० समयात् परं तेषां निर्याणकाल इति निर्णयसागरमुद्रितभूमिकातोऽवसीयते ।

श्रीभास्कररायचरणानां यादृशी व्याख्यापद्धतिर्यच्च सर्वतोमुखं पाण्डित्यं तत् तादृशं तदीयसमकालेषु तत्परवर्तिष्वपि पण्डितेषु न दृष्टिगोचरीभवति। विशेषतश्च वैदिकमर्यादामनुसृत्य तन्त्राणां व्याख्यानक्रमः शाङ्करसम्प्रदायपरिपालनं चाऽतीव श्लाघनीयं महनीयं चाभाति। मीमांसान्यायानामागमशास्त्रेण संवादोऽप्यभूतपूर्वो हृदयङ्गमश्च तेषां कृतिषु प्रतिभासते। किं बहुना तेषामेव शिष्येण श्री जगन्नाथविदुषा निबद्धां श्लोकद्वयीमुल्लिख्य साञ्जलिबन्धं प्रणम्य च विरमामः।

भूषावानखिलैर्गुणैः स्वकृतिभिः सन्तानवान् भूयसा
विद्याभिर्धनवान् सुधाधवलया कीर्त्या चिरं देहवान्।

पित्रा दैवतवान् अभूत्सुकृतवान् लोकोपकारेण यः
साधर्म्यं लभतामनेन भुवि कः श्रीभारतीयज्वना॥

यस्याऽदृष्टो नाऽस्ति भूमण्डलांशो
यस्याऽदासो विद्यते न क्षितीशः।

यस्याऽज्ञातं नैव शास्त्रं किमन्यै-
र्यस्याऽऽकारः सा पराशक्तिरेव॥

**॥ श्रीगुरुचरणारविन्दार्पणमस्तु ॥**

संवत् २०३४
कार्तिक कृष्ण संकष्टचतुर्थी
रविवासरः
**वा रा ण सी**

**बटुकनाथ शास्त्री खिस्ते**

टिप्पणी—एतच्चरितलेखने विद्यावयस्तपोवृद्धानां श्रीभास्कररायसम्प्रदायसेवनबद्धपरिकराणामस्मज्ज्येष्ठसतीर्थ्यानां श्रीरघुनाथ गोपाल साठेमहोदयानां सूचनालेखः साहाय्यभूत आसीदिति तेषु श्रद्धीभावमावेदयामि।

श्रीः

# श्रीमद्भास्कररायप्रणीतः

# तृचभास्करः

---

श्री गुरुगणेशाय नमः ॥ अथ श्रीमद्भास्कररायभारतीप्रणीततृचभास्करप्रारम्भः ॥

कविरपि गुरुरपि मूढो यद्धामगतः कलाधरोऽप्यकलः ।
भास्करमेव तमेकं मन्ये गम्भीरभारतीजातम् ॥ १ ॥

गम्भीरराज इति दीक्षितभारतीति
योऽन्वर्थनाम समवाप नृपाद् बुधेभ्यः ।
तस्यात्मजो भृशमवेक्ष्य बहून् निबन्धान्
ग्रथ्नात्यदः किमपि भास्कररायनामा ॥ २ ॥

भारत्युपाख्यबुधमण्डनयायजूक-गम्भीरराजसुतभास्कररायसूरिः ।
नानानिबन्धमतविप्रतिपत्तिलब्ध-जन्मानमप्रतिहतं भ्रममुच्छिनत्ति ॥ ३ ॥

सन्त्येव दोषाः कतिचिद्विशेषादथापि तोषाय सतां ममैषा ।
कृतिर्हि मुख्या **तृचभास्कराख्या** गुणाधिकख्यापितगुर्वभिख्या ॥ ४ ॥

आप्राचः कामरूपाद् द्रुहिणसुतनदप्लावितादाप्रतीचो
गान्धारात्सिन्धुसार्द्राद्रघुवररचितादाच सेतोरवाचः ।
आकेदारादुदीचस्तुहिनगहनतः सन्ति विद्वत्समाजा
ये ये तानेष यत्नः सुखयतु समजान्कश्चमत्कर्तुमीष्टे ॥ ५ ॥

इह खलु धर्मार्थकाममोक्षाणां चतुर्विधपुरुषार्थानामपि साधनायोपयुक्तमिदं पाञ्चभौतिकं स्थूलं शरीरम् । "शरीरमाद्यं खलु धर्मसाधनम्" इति अभियुक्तप्रसिद्धेः । तत्र धर्मपदस्य अर्थादुपलक्षणत्वात् । ईदृशस्य च निखिलश्रेयःसाधनस्य देहस्योपघाताय रोगरूपा विघ्ना भूयांस एव । "श्रेयांसि बहुविघ्नानि भवन्ति महतामपि" इति वचनात् । ते च यद्यपि

भिषग्भिस्त्रिविधा वर्ण्यन्ते—दोषजाः कर्मजा उभयजाश्चेति। दोषा वातपित्तकफाः। कर्म जन्मान्तरार्जितमेतज्जन्मार्जितमत्युत्कटं वा पापम्। तथापि कार्यमात्रं प्रति अदृष्टस्य हेतुतायाः सर्वसम्मतत्वेन पुण्यपापे विना सुखदुःखयोरुत्पत्तुमेवाशक्यत्वेन दोषजानामपि जनकं कर्म अङ्गीकरणीयमित्युभयविधः एकविध एव वा रोगसमूहः। अतस्तत्प्रतिघातकं किञ्चित्कर्म गवेषणीयम्। "कर्मणा कर्म हन्यते" इति न्यायात्। तच्च तन्त्रेषु नानादैवत्यम् अनेकविधमुपलभ्यते। तेषु च केवलानुमानागमादिगम्यस्यदैवतान्यपेक्ष्य प्रत्यक्षसहकृतेः "सूर्य आत्मा जगतस्तस्थुषश्च" इत्यादिभिरागमैर्गम्यस्य दैवतस्य प्रबलताया न्यायसिद्धत्वेन—

"दिनेशं प्रवदन्त्यन्ये सर्वेशं वेदवादिनः।
स्तुवन्ति चैव गायत्र्या सायं प्रातरतन्द्रिताः॥"

इति **भागवतान्तरे** तृतीयस्कन्धे सूर्यस्यैव वेदमातृप्रतिपाद्यत्वोक्त्या च सर्वदेवोत्तमत्वम्। **आरुणकेतुकभाष्यादा**वपि स्पष्टमस्य माहात्म्यम्। स्पष्टतरं च **ब्रह्मपुराणे**—

"गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः।
य इच्छेन्मोक्षमाधातुं देवतां कां यजेत सः॥"

इत्यादिरूपे मुनीनां प्रश्ने ब्रह्मणः प्रत्युत्तरम्—

"उदयन्नेष कुरुते जगद्वितिमिरं करैः।
नातः परतरो देवः कश्चिदन्यो द्विजोत्तमाः॥
अनादिनिधनो ह्येष पुरुषः शाश्वतोऽव्ययः।
तापयन्नेष लोकांस्त्रीन् दहन् रश्मिभिरुल्बणैः॥
सर्वदेवमयो ह्येष तपसां चाशुभावनः।
सर्वस्य जगतो नाथः सर्वसाक्षी शुभाशुभे।
संक्षिपत्येष विश्वं च तथा विसृजते पुनः॥" इत्यादिना,

"ईषन्मात्रश्रुतमुखा ब्रह्मविष्णुशिवादयः।
प्रत्यक्षोऽयं परो देवः सूर्यस्तिमिरनाशनः॥
तस्मादन्यत्र भक्तिर्हि न कार्या शुभमिच्छता।
दृष्टं न बाधते यस्माददृष्टादेवमेव हि॥" इत्यन्तेन॥

तदन्ते द्वादशमूर्तिभिः सर्वजगद्व्यापिकत्वमुपपाद्य मित्रावरुणयोः सूर्यस्य तपश्चर्या किमर्थेति प्रश्ने सूर्यनारदसंवादमुखेन "यत्तत्सूक्ष्ममविज्ञेयमव्यक्तमचलं ध्रुवम्" इत्यादिना महता प्रबन्धेन केवलपरब्रह्मरूपत्वं लीलाविग्रहरूपता च प्रतिपादिता। **कूर्मपुराणे**ऽपि

“ सर्वात्मा सर्वलोकेशो महादेवः प्रजापतिः ।
सूर्य एव त्रिलोकस्य मूलं परमदैवतम् ॥ ” इति ।

एवं **भविष्योत्तर-स्कान्दा**दिवाक्यान्युन्नेयानि ।

“ घृणिः सूर्य आदित्यो न प्रभावात्यक्षरम् ॥ ”

इत्याद्याः श्रुतयः प्रत्यक्षा एव मूलं षड्विधेषु ।

**सौरमते** पुरुषसूक्तस्य सूर्यपरत्वं सहस्रपाच्छब्दस्वारस्यादिभिर्वर्णितम् ॥

अत एव रुद्रस्य मन्त्रे—

“ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
सहस्ररश्मिरादित्यः सहस्रकिरणो रविः ” ॥ इत्येवं सूर्यसहस्रनाम्नामुपक्रमः ।

अद्वैतवादे मण्डलावच्छिन्नस्य, द्वैतवादे तदन्तर्यामिणो वा ब्रह्मण एवोपास्यत्वात्सर्वमेतदविरुद्धम् । अत एव “ चक्षोः सूर्यो अजायत ” “ एषोदेति सूर्यः ” “ न तत्र सूर्यो भाति ” इत्यादयो मण्डलमात्रपरा इति न सूर्यस्य ब्रह्मत्वविघातकाः । “ अन्तस्तद्धर्मोपदेशात् ” इत्यधिकरणमप्यत्रानुकूलम् । अनयैव च दिशा षट् प्रकारान् सौरान्निगदद्भिरपि **शङ्करभगवत्पादैः** पुनः परस्पराविरोधेन **सौरमत**स्थापनमाचरितमिति स्पष्टं **शङ्करविजये** त्रयोदशप्रकरणेऽष्टषष्टितमप्रकरणे च । एवं सूर्याख्यब्रह्मणः सर्वदेवोत्तमत्वात् सौराण्येव कर्माणि प्रबलानि विशेषतश्चारोग्यफलकानि । “ आरोग्यं भास्करादिच्छेत् ” इति वचनात् ॥

“ येषां धर्मक्रियाः सर्वाः सदैवोद्दिश्य भास्करम् ।
न कुले जायते तेषां दारिद्र्यं व्याधयोपि वा ॥ ” इति **ब्राह्माच्च** ॥

सौराण्यपि कर्माणि तन्त्रेष्वनेकरूपाणि दृश्यन्ते भुवनेशीचतुरक्षरप्रयोजनतिलकादि मन्त्रजपादिरूपाणि यद्यपि, तथापि वैदिकत्वेन तृचकरणकप्रयोगाणां सर्वोत्तमत्वेन त एवेह प्रतिपाद्यन्ते । तदुक्तं **भविष्योत्तरपुराणे** अर्जुनं प्रति भगवता श्रीकृष्णेन ।

“ उद्यन्नद्येति मन्त्रोऽयं सौरः पापप्रणाशनः ।
रोगघ्नश्च द्विषघ्नश्च भुक्तिमुक्तिफलप्रदः ॥

कण्वेन च पुरा दृष्टो गुह्याद्गुह्यतरो महान् ।
पुत्रस्य रोगनाशाय सर्वलोकहिताय च ।
तेन चाराधितो देवस्तृचमन्त्रेणभास्करः ” ॥ इत्यादि ।

अत एव चात्र त्रैवर्णिकानां स्वतोऽधिकारः शूद्राणां तु ब्राह्मणद्वारा । तत्र तृचशब्देन “ उद्यन्नद्य मित्रमह ” इत्यादिकं ऋक्त्रयम् । तच्च यद्यपि बह्वृचैर्याजुषैश्च तृतीयस्यां ऋचि

परस्परवैलक्षण्येन पठ्यते। दृश्यते च शाखाभेदेन भिन्नपाठानां मन्त्राणां व्यवस्थया कर्मसु विनियोगो यथाऽर्चिकस्य षोडशर्चस्य पुरुषसूक्तस्य पठ्यते देवपूजोपचारेषु षोडशेषु विनियोगो, याजुषस्य त्वष्टादशर्चस्य सन्तानगोपालपुटितस्य **प्रपञ्चसाराद्युक्ते** वन्ध्यात्वहरे प्रयोगे विनियोगः, तथापि प्रकृते विशेषे प्रमाणाभावाद्विकल्प एव न्यायसिद्धः। अत एव **महार्णवे** रुद्राङ्गन्यासे द्विविधयोरपि पुरुषसूक्तयोर्विकल्पोऽभिहितः। क्वचित्तु वचनबलादाहत्य विहिता व्यवस्था न दुष्यति।

शिष्टाचारस्तु आर्चिकतृचस्यैव वक्ष्यमाणकर्मसु विनियोगो दृश्यते। तस्य च **शौनक-ऋग्विधानोक्त**रीत्या पुरश्चरणमावश्यकम्। तेन विना सिद्धेरभावात् तां विना काम्यप्रयोग-स्यानुष्ठातुमशक्यत्वात्। "एवं सिद्धे मनौ मन्त्री प्रयोगान् कर्तुमर्हति" इति वचनात्।

तदाह **शौनकः**—

"सर्वेषां वेदमन्त्राणां सिद्ध्यर्थं लक्षकं जपेत्।
गायत्रीं न्यासपूर्वं च सप्तव्याहृतिसंपुटाम्।" इति।

अन्यत्रापि "प्रथमं लक्षगायत्रीं सप्तव्याहृतिसंपुटाम्" इति। ततः सर्वैर्वेदमन्त्रैरिष्टसिद्धिं स विन्दति इति। यो जपेदिति विशेषः। लक्षगायत्रीजपात्पूर्वम् अयुतगायत्रीजपोऽन्योपि कार्यः। "त्र्ययुतं वै जपेत्पूर्वं गायत्री सिद्धिदा ततः। घृतेन गायत्र्या जुहुयादथ"। इति **शौनकोक्तेः**।

ततश्च गायत्रीमन्त्रसिद्ध्यर्थं सङ्कल्प्य त्रिंशत्सहस्रं गायत्रीं जप्त्वा होमतर्पणमार्जन-ब्राह्मणभोजनानि तत्तद्दशांशतः कृत्वा पश्चात् तृचमन्त्रसिद्ध्यर्थं सङ्कल्प्य लक्षगायत्रीजपं कृत्वा होमादींश्च निर्वर्त्य पश्चादमुकरोगनिरासार्थं सङ्कल्प्य तृचेन अर्घ्यादिकं कुर्यात् इति रहस्यम्। तदभावे तन्त्रोक्तान् पुरश्चरणप्रतिनिधीन् उपरागादिकालीनजपादिरूपान् कृत्वा साधयेत्। यस्य च सिद्धारिचक्रशोधरीत्या मध्यमोऽधमो वा मन्त्रो भवति तेन वर्णमालया जप्तव्यः। वैदिकमन्त्रेषु सिद्धारिशोधनाभावेऽपि न दोष इति **केचित्**। उपदेशादिपुरश्चरणान्तः प्रकारस्तु गुरुमुखाद्ग्रन्थान्तराद्वा ज्ञातव्यः। एवं सिद्धमन्त्रस्य रोगादिनिवृत्तिकामस्य बहवः प्रयोगास्तत्र तत्राम्नाताः। ते च प्रयोगा अर्घ्यहोमनमस्कारप्रदक्षिणव्रतयन्त्रधारणादिरूपाः।

यावदङ्गोपसंहारसमर्थस्यैव काम्येऽधिकार इति **षष्ठाधिकरणे** सिद्धान्तात् यावदङ्गानि ज्ञातव्यानि। तानि च द्विविधानि। सामान्यविशेषभेदात्। सामान्याङ्गानि द्विविधानि। कानिचिदग्निहोत्रोपासनादिश्रौतस्मार्तक्रियासाधारणकर्मत्वपुरस्कारेण प्रवृत्तानि श्रुतिषु स्मृतिषु **भविष्यादिपुराणेषु** व्यक्तानि। कानिचिन्मन्त्रत्वसामान्यपुरस्कारेण प्रवृत्तानि तान्त्रि-काणीति। तत्राद्यानि शिरःस्नानाचमनप्राणायामसङ्कल्पादीनि। द्वितीयानि भूशुद्ध्यादीनि शेषिताङ्गानि तृचषडङ्गन्यासादीनि।

"शिरःस्नातश्च कुर्वीत दैवं पित्र्यमथापि वा ।
उदङ्मुखः प्राङ्मुखो वा श्मश्रुकर्म न कारयेत् ॥

देवार्चनादिकर्माणि तथा गुर्वभिवादनम् ।
कुर्वीत सम्यगाचम्य प्रयतोऽपि सदा द्विजः ॥" इति **मार्कण्डेयपुराणात्** ।

"प्राणानायम्य कुर्वीत सर्वकर्माणि संयतः" इति **बृहन्मनूक्तेश्च** ।

"मासपक्षतिथीनां च निमित्तानां च सर्वशः ।
उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत् ।" इति **देवलस्मृतेश्च** ।

मन्त्रार्थस्तु महासौरमन्त्राणामर्थनिर्णयावसरे व्यक्तीभविष्यति । कालस्तु ज्योतिर्विदा निर्दिष्टो मुख्यः । तादृशस्यैव तच्छास्त्रीयैर्वचनैरङ्गत्वसिद्धेः । तेष्वपि गौणमुख्यविभागस्तच्छास्त्रादेवावगन्तव्यः । रोगदिवसो भक्त्युद्रेकदिवसोऽपि ज्योतिःशास्त्रलक्षणराहित्येऽपि मुख्य एवावगन्तव्यः ।

"अयने तूत्तरे सूर्यमथवा दक्षिणायने ।
पूजयित्वा विशेषेण सर्वपापैः प्रमुच्यते ॥

एवं वेलासु सकलास्ववेलासु च मानवः ।
भक्त्या पूजयते योऽर्कं सोऽर्कलोके महीयते ॥"

इति **ब्रह्मपुराण**वचनस्यात्रैव पर्यवसानादिति दिक् ॥

अत्र शिरःस्नानं स्वगृह्योक्तविधिना निर्वर्त्य तान्त्रिकविधिनापि स्नानान्तरं कुर्यात् । तृचेन कुम्भमुद्धृत्य द्वादशवारं शिरसि जलेन प्रोक्षणं, प्रतिवारं तृचावृत्तिः । ततस्तृचमुच्चार्य श्रीसूर्यं तर्पयामीत्युक्त्वा त्रिः सकृद्वा तर्पणम् । तृचान्ते श्रीसूर्यैतत्तेऽर्घ्यं स्वाहेत्युक्त्वा त्रिरर्घ्यदानम् । तृचेन त्रिराचमनं चेति तान्त्रिकस्नानविधिरिति **केचित्**प्रयोगकारा लिखन्ति । अत्रेदं चिन्त्यम् "वैदिकं कर्म निर्वर्त्य तान्त्रिकं तु समाचरेत्" इति वचनात् प्रातःस्मरणदन्तधावनादिनिखिलाह्निककर्मसमूहस्य स्मृतितन्त्रभेदेन द्वैविध्याद्द्विविधयोरपि कर्मणोः सर्वांशे समुच्चयः । तत्र स्नानमात्रे अवयुत्यानुवादरूपं लेखनमनर्थकम् । यदि परं तृचस्य वैदिकत्वेन नात्र तान्त्रिककर्मणामवकाश इत्युच्यते तदा सुतरां विरुद्धो लेखः । वस्तुतस्तु वैदिकानामपि गायत्रीशिवपञ्चाक्षरसौराष्टाक्षरादीनां तान्त्रिकाङ्गकलापसाहित्यस्यावश्यकत्वोक्तेर्न मन्त्रगततान्त्रिकत्ववैदिकत्वाभ्यां तयोः कर्मणोर्व्यवस्था । अपि तु तान्त्रिकदीक्षावतां तन्त्रकर्माण्यावश्यकानि नान्येषामिति । अत एव

"बहुरूपं वा स्वगृह्योक्तं यस्य यावत्प्रकीर्तितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥"

इति वचनमदीक्षावत्परत्वेन सङ्गच्छते । पूर्वोक्तसमुच्चयविधायकं तु दीक्षितपरमिति विवेकः । दीक्षितानामपि यद्यपि प्रतितन्त्रं भिन्नभिन्नाङ्गशालिनां कर्मणां विधानेऽपि सर्वशाखाप्रत्ययमेकं कर्म सर्ववेदान्तप्रत्ययमेकं ब्रह्मोपासनम् इति पूर्वोत्तरतन्त्रोक्तन्यायेन सर्वतन्त्रप्रत्ययस्यापि कर्मण ऐक्येन तन्त्रान्तरोक्तगुणोपसंहार आवश्यकस्तथापि यावत्तन्त्रोपसंहारस्याऽशक्यत्वेन बह्वल्पं वेतिवचनमूलकन्यायेन तत्तत्तन्त्रोक्तदीक्षापारंपर्यशालिना तत्तत्तन्त्रोक्तान्येव कर्माणि मुख्यानि नेतराणीति **सुन्दरीमहोदये** व्यक्तम् । तस्मात्तन्त्रोक्तदीक्षावद्भिः सर्वाणि कर्माणि वैदिकैः समुच्चित्य कार्याणि शुद्धवैदिकैस्तु नेति सिद्धम् । भूतशुद्ध्यादयस्तु केचित्तन्त्रोक्ताः शुद्धवैदिकानामप्यावश्यका इति दिक् । इदं च स्नानं सूर्योदयात्पूर्वमेव कार्यम् ॥ " साधको विधिना नित्यं स्नात्वा ह्यनुदिते रवौ " इति **भविष्यात्** ॥

स्नानोत्तरं शुक्लाम्बरे दध्यात् । " शुक्लाम्बरधरो भूत्वा इति वचनात् । "

" जपकरणोपवासादौ धौतवस्त्रधरो भवेत् ।
अलङ्कृतः शुचिर्मौनी श्रद्धावान् विजितेन्द्रियः ॥ " **व्यासः**

होमदेवार्चनाद्यासु क्रियास्वाचमने तथा ।
नैकवस्त्रः प्रवर्तेत द्विजवाचनके तथा ॥

सव्यांसादीषदुद्धृत्य कटिदेशधृताम्बरः ।
एकवस्त्रः स विज्ञेयो दैवे पित्र्ये च गर्हितः ॥

विकच्छोऽनुत्तरीयश्च नग्नो निर्वस्त्र एव च ।
श्रौतं स्मार्तं तान्त्रिकं वा कर्म किञ्चन नाचरेत् ॥

नग्नो मलिनवस्त्रः स्यान्नग्नो जीर्णाम्बरस्तथा ।
नग्नो निस्यूतवसनो नग्नो द्विगुणिताम्बरः ।
आर्द्रवासास्तथा नग्नो नग्नः काषायवस्त्रकः ॥

दानमाचमनं होमं भोजनं देवतार्चनम् ।
प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥

आसनारूढपादो वा जान्वोर्वा जङ्घयोस्तथा ।
कृतावगुण्ठनो यश्च प्रौढपादः स उच्यते ॥

दानं प्रतिग्रहो होमो भोजनं बलिमेव च ।
साङ्गुष्ठेन सदा कार्यम असुरेभ्योऽन्यथा भवेत् ॥ **हारीतः** ।

जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ।
अन्यूनं कटकं कुर्यात् सौवर्णं रजतैः कुशैः ॥ **बौधायनः**

भोजनं हवनं दानमुपहारः प्रतिग्रहः ।
नैव द्विजेन कार्याणि तद्वदाचमनक्रिया ॥

तैलयन्त्रोक्तयन्त्रादेः शब्दो यावत्प्रवर्तते ।
तावत्कर्म न कुर्वीत शूद्रान्त्यपतितेष्वपि ॥

वर्णत्रयस्य संस्पर्शादाचम्य प्रयतो भवेत् ।
संस्पर्शे प्रतिलोमानां कर्मत्यागो विधीयते ॥

चण्डालादीन् जपे होमे दृष्ट्वाऽऽचामेद्द्विजोत्तमः ।
श्वादीन् दृष्ट्वा तथैवापि कर्णं वा दक्षिणं स्पृशेत् ॥ **शङ्खः**

चण्डालोपगमे काम्ये स्वानुष्ठानान्तरक्षुतः ।
हविःशेषप्राशने च द्विराचमनमीरितम् ॥ **कात्यायनः**

अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ।
मार्जारमूषकस्पर्शे आकुलक्रोधसम्भवे ।
अन्येष्वल्पनिमित्तेषु कर्म कुर्वन् जलं स्पृशेत् ॥

अन्येऽपि नियमाः **कर्मप्रदीपे प्रयोगमालायां** च द्रष्टव्याः । देशस्तु कामरूपादि-गान्धारान्तो हिमवदादिसेत्वन्तश्च । तत्राप्युत्तरदेशमार्यावर्तस्तत्रापि ब्रह्मावर्तो मुख्यः ।

तत्र तीर्थानि तीर्थयात्रायां **भारते** प्रतिपादितान्यपि मुख्यानि ।

दक्षिणदेशे—

सह्यस्य **चोत्तरेणैव** यावद्गोदावरी नदी ।
पृथिव्यामपि कृत्स्नायामेष देशोऽतिपावनः ॥ इति **मात्स्ये** प्रतिपादितो मुख्यः ।

तत्रापि ताम्रपर्ण्यन्तो **भागवते** प्रतिपादितो मुख्यः । प्रह्लादतीर्थयात्रायां **वामनपुराणे** प्रतिपादितानि तीर्थान्यपि मुख्यानि । तीर्थेष्वपि द्वीपमध्यकर्मनिषेधः प्रसवश्च ।

" वृषभैकशतं यत्र गवां तिष्ठत्यसंयुतम् ।
न स धर्महतो द्वीप इति धर्मविदो विदुः ॥ इत्यादिरन्यत्र विस्तरः ।

गर्भाधानादिसंस्कारे.........कर्मसु ।
नान्दीश्राद्धं पुरा कुर्यात्कर्मादौ स्वस्तिवाचनम् ॥ इति **स्मृतिसङ्ग्रहात्** ।

तद्विधानं **बौधायनकात्यायनप्रचेतःशातातपपारस्करादिकार्षग्रन्थेषु प्रयोगरत्नादिषु** द्रष्टव्यम् ।

ततः प्रणवमुच्चरेत्—

“ तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ ” इतिवन्निर्देशरूपार्थत्वादस्य,
सव्यं हि मनुष्याः पूर्वमस्रत ! ” इतिवद्विधिकल्पकत्वात् ।

तत्र विशेष **आपस्तम्बेनोक्तः**—

“ त्रिमात्रस्तु प्रयोक्तव्यः कर्मारम्भेषु सर्वशः ।
सार्धास्तिस्रस्तु कर्तव्या मात्रास्तत्त्वार्थचिन्तकैः ।
देवताध्यानकाले तु प्लुतं कुर्यात्ततोऽधिकम् ॥ ”

तत्र स्वरविशेषो बह्वृचादिभेदेन । तेषां व्यवस्था **चाथर्वणे ब्राह्मणे मन्त्रभाष्ये** च द्रष्टव्या ॥

तत ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं च दध्यात् । **आपस्तम्बेन** तूभयोरप्यनुरूपकता दर्शिता ॥
ततः पुण्ड्राङ्गमाचमनं कृत्वा कर्मोपक्रमाङ्गमाचमनं कुर्यात् । ततस्त्रिः प्राणानायच्छेत् ॥

देवार्चने जपे होमे स्वाध्याये श्राद्धकर्मणि ।
स्नाने दाने तथा ध्याने प्राणायामास्त्रयस्त्रयः ॥ इति **कर्मप्रदीप**वचनात् ।

अयं च प्राणायामो गायत्र्या । मूलेन प्राणायामस्तु तत्र तत्र वक्ष्यते । सङ्कल्पे तु विशेषः । अनेकदिनसाध्यत्वादस्य कर्मणः सर्वेषां दिवसानामुल्लेखो, न प्रारम्भदिनमात्रस्येति **शान्तिमयूखे** व्यक्तम् ॥

ततो विनायकपूजा । “ आदौ विनायकः पूज्यः, अन्ते तु कुलदेवता ” इति **गृह्यपरिशिष्टात्** । एवं पुण्याहवाचनमातृकापूजननान्दीश्राद्धादीनि कार्याणि । स्वयं कर्तुमशक्तश्चेत् ऋत्विजः कर्मानुसारेण यथासङ्ख्यं यथोक्तलक्षणान् वृणीयात् । तेषु बहुशाखाध्यायी स्वशाखामात्राध्यायी प्रकृतकर्मोपयुक्तमन्त्रमात्राध्यायी वा ब्राह्मणो वरणीयः । सोऽप्यर्थज्ञानवान् मुख्यः ।

“ मन्त्रार्थतो जपन् जुह्वन् तथैवाध्यापयन् द्विजः ।
स्वर्गलोकमवाप्नोति नरकं तु विपर्यये ॥

श्रुतहीनमधीतं यन्नेह नामुत्र तद्भवेत् ।
श्रुतं तु केवलमपि समुद्धाराय कल्पते ।
समुज्झितं स्तोकमपि श्रुताधीतं विशिष्यते ॥ इत्याद्यापस्तम्बसूत्रभाष्ये **व्यासवचनात्** ।

तस्य सर्वथाऽप्यलाभे केवलपाठी वा ग्राह्यः । "योऽर्धज्ञ इत् सकलं भद्रमश्नुते" इति **श्रुतौ** सकलपदात् ज्ञापकात् । मूर्खस्तु सुतरां न वरणीयः ।

नासन् पितृकार्येषु देवकार्येषु ब्राह्मणः ।
मूर्खः समुपवर्ज्यश्च कार्यस्य फलमिच्छता ।
मूर्खः शूद्रसमो ज्ञेयः स त्याज्यः सर्वकर्मसु ॥" इति **भागवते**

तृतीयस्कन्धे निषेधदर्शनात् ।

तेषां ( ऋत्विजां ) मधुपर्कादिपुरःसरं पूजा । पूजाङ्गोपचाराणां क्रमे मधुपर्कश्च ऋत्विक्शाखोक्तरीत्या इति **केचित्** । यजमानशाखया इत्य**न्ये** । तत्राप्यनेकेषु ऋत्विक्षु पूजाङ्गोपचाराणां क्रमे काण्डानुसमय **इत्यपरे** । पदार्थानुसमय इति तु **न्यायविदः** । ऋत्विग्भ्यश्च वस्त्रयुग्मोदपात्रकेयूरकरकण्ठमणिबन्धाङ्गुलिकर्णाभरणानि देयानि । पुरोहितस्यापि ऋत्विग्भ्यः पूर्वम् उक्तरीत्या पूजनमावश्यकम् । "पुरोहिताय दत्त्वाऽथ ऋत्विग्भ्यश्चापि दापयेत् ।" इति **लैङ्गात्** । अत्रोक्तेषु वक्ष्यमाणेषु चाङ्गेषु तेषां क्रमसमुच्चयविकल्पादिषु च प्रतिपदार्थ-प्रमाणभूतानि वचनानि विस्तरभयान्न लिख्यन्ते । **इति स्मार्तसामान्याङ्गनिर्णयः ॥**

ततः स्वयम् ऋत्विग्वोदकान्तिकं गच्छेत्—

"उदकान्तिकमासीनः प्राणायामं विधाय च ।
सूर्योपास्तिं करिष्येऽहम् अमुकाभीष्टसिद्धये ॥" इत्यादि**वचनात्** । इति

मुख्यः कल्पः । उदकमत्र प्रवहद्रूपं मुख्यम् । तदन्तिकदेशस्यान्यपुरुषसत्ताकत्वाभावेन कर्मजन्यफलस्य तत्रांशतोऽपि भोक्त्रन्तराभावात् । **ब्रह्मपुराणे**—

"प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् ।
तत्र नारायणः स्वामी नान्यः स्वामी कदाचन ॥" इति ।

तदभावे स्वसत्ताकस्थले सिद्धत्वोद्धृतसङ्गृहीतजलेनार्घ्यदानमनुकल्पः । नदीतीरे चतुर्द्वारमण्डपं, मध्ये हस्तमात्रा वेदिका । तन्मध्ये षड्दलं, वृत्तं, द्वादशदलं, वृत्तत्रयं च कुङ्कुमेन विलिखेदिति **भविष्ये** । तदशक्तौ चिन्तनमपि तन्त्रसिद्धम् । तत आचम्य शिखां बध्नीयात् । तत्रोर्ध्वकेशीति वा गायत्री वा मानस्तोके इति वा विकल्पिता मन्त्राः ।

ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभोजने ।
तिष्ठ देवि ! शिखाबन्धे चामुण्डे ह्यपराजिते ॥

मानस्तोके इत्यृक् शाखाभेदेन भिन्नाऽपीह विकल्पिता । प्रथमद्वितीययोः समुच्चय इति **केचित्** । अयं च शिखाबन्धो बद्धाया अपि शिखाया उपरि कुशैः पुनर्बन्ध इति

सम्प्रदायः । अन्यथा मुक्तशिखस्यैतत्प्राचीनाङ्गेषु कर्तुमनधिकारापत्तेः । "विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्" इति **वचनात्** । विशिख इत्यस्य विमुक्तशिख इत्यर्थः । "सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।" इति पूर्वार्धानुसारात् । वक्ष्यमाणासनोपवेशोत्तरं शिखाबन्ध इति **केचित्** । पुनराचम्य । "सहस्राणि सहस्रशो ये रुद्रा" इति मन्त्रेण बाहुद्वयं हृदयं च स्पृशेत् ।

"उत्तिष्ठन्त्विह भूतानि भूमौ तिष्ठति भूपतिः ।
सर्वेषामविरोधेन ब्रह्मकर्म समारभे ।।"

प्रतिप्रधानं मन्त्रावृत्तिः । "उत्तिष्ठन्तु" इति मन्त्रेण भूतानां प्रार्थना ॥
देवतामण्डपं चतुर्द्वारं विचित्रं विचिन्त्यान्तरितं रक्ष इति तदन्तरक्षतान् प्रक्षिप्य द्वारपालेभ्यो नमः इत्युक्त्वा बहिर्निर्गच्छतां विघ्नसङ्घानां वामाङ्गसङ्कोचेन मार्गं ददान इव वहन्नाडीपादेनान्तः प्रविश्य । तारवर्मास्त्रैर्यागभूमिं प्रोक्ष्य गन्धपुष्पाक्षतानाकीर्य पूर्वादिचतुर्द्वारदेवताः सिंहासनदेवतादिकं च पूजयेत् । अत्र पूजनं नाम गन्धपुष्पाक्षतानाम् अक्षतानां वा देवताध्यानपुरःसरं तत्तत्स्थाने प्रक्षेपः । ऊर्ध्वं "ब्रह्मणे नमः" इत्यस्यान्ते "विश्वशक्त्यै नमः" इत्यादि षण्मन्त्रैः सकुशपुष्पमासनस्थाने प्रक्षिप्य "पृथ्वि त्वया" इत्यासनमन्त्रस्पर्शादीन् स्मरणपूर्वकं न्यसेत् । द्वारस्य दक्षशाखायां धाता गङ्गा, वामायां विधाता यमुनाऽधो देहली उपरि द्वारश्रीरिति प्रतिद्वारं सिंहासनं ध्यात्वा तस्य द्वारचतुष्के द्वौ द्वौ भद्रसुभद्रौ बलप्रबलौ चण्डप्रचण्डौ जयविजयौ विभज्य विभज्य गणपतिसरस्वतीगुरुदुर्गाक्षेत्रपालाः पञ्चमातरः सर्वर्षिपितृदेवताश्चाभितो वास्तुपुरुषो मध्ये, दीपस्थाने दीपनाथ ऊर्ध्वं ब्रह्मेति पूज्याः । सबिन्दुप्रथमाक्षरा ङे नमोऽन्ता विधात्रादयश्चतुर्विंशतिमन्त्राः । एवं विश्वशक्तिर्मायाशक्तिराधारशक्तिः कूर्मः शेषः पृथिवी चेति षण्मन्त्राः ।

"पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥
मेरुपृष्ठः कूर्मः सुतलं चेति ऋष्यादयः ।

विनियोगः आसने । ऋष्यादिपदानि प्रथमान्तानि स्मरणे । न्यासे तु चतुर्थीनमोऽन्तानि । द्विरुच्चारणं **केचिदिच्छन्ति** । "ऋषिर्गुरुत्वाच्छिरसैव धार्यश्छन्दोऽक्षरत्वाद्रसनाप्रदेशे" इत्यादिवचनानुसारेण, अमुकऋषये नमः इति शिरसि न्यसेत् । अमुकछन्दसे नमः मुखे । देवतायै नमः हृदये । बीजाय नमः दक्षस्तने मूलाधारे वा । शक्तये नमः वामस्तने पादयोर्वा । कीलकाय नमः हृदये नाभौ वा । विनियोगाय नमः करसम्पुटे । यस्य मन्त्रस्य बहुषु विनियोगस्तस्य प्रकृतमेव विनियोगं पठेत् । इति **महार्णवे** ।

अत्र दक्षवामस्तनहृदयानां मूलाधारपादयुगनाभीनाञ्च समुच्चितानां विकल्पः । तेन दक्षस्तने न्यासपक्षे शक्तेः पादयुगे न्यासः इत्यादि बोध्यम् ।

**तन्त्रान्तरे** ऋष्यादिन्यासे मुद्रा उक्ताः । मध्यमातर्जन्यङ्गुष्ठानां संहतानामधोमुखानाम् अग्रं ऋषिमुद्रा । कनिष्ठाऽनामिकाङ्गुष्ठानां तादृशं ( अग्रं ) छन्दोमुद्रा । हस्ततलेन देवतामुद्रा । पञ्चाङ्गुल्यग्रैर्बीजमुद्रा । व्यत्यस्तहस्ताभ्यां पादयोः स्पर्शः शाक्तीमुद्रा । अञ्जलिं विदार्यैव शीर्षादिपादान्तं स्पर्शः कीलकमुद्रा । हृद्गताञ्जलिर्विनियोगमुद्रा । **रामतापनीये** बीजादित्रयस्य स्तनयुगे हृदि च न्यासमुक्त्वा सर्वेषामेव मन्त्राणामेष साधारणो विधिरित्यतिदेशः कृतः । तत्पक्षे कनिष्ठाङ्गुष्ठयोग एव बीजादित्रयमुद्राः । एषैव सर्वत्र ऋष्यादिन्यासरीतिर्याजुषाणाम् । **बह्वृचानां** तु, आदौ देवता ततश्छन्द इति क्रम इति विशेषः ।

पृथ्वि त्वयेत्यासनं दर्भमुष्ट्यादिरूपं भुवि प्रसारयेत् ।

विष्णुशक्तिसमुत्पन्ने शङ्खवर्णमहीतले ।
अनेकरत्नसम्पूर्णे **भूमिदेवि** नमोऽस्तु ते ॥

इति भुवं नत्वा । कमलासनाय नम इत्यादिभिः षड्भिर्मन्त्रैरासनमभ्यर्च्य, सुरभिमुद्रया प्रोक्ष्य भूर्भुवः स्वरोम् इत्युपविशेत् । कमलानन्तयोगविमलकूर्मपरमसुखासनचतुर्थी नमोऽन्तानि आद्यक्षरबीजानि मन्त्राः । अपक्रामन्त्वपसर्पन्त्वित्यनयोर्मन्त्रयोः ऋष्यादिन्यासत्रयं कृत्वा, ताभ्यां वामपार्ष्णिघातेन भौमान् दक्षिणतर्जनीमध्यमाभ्यां वामहस्ततले ताडनजनितशब्दरूपतालत्रयेण उपर्युपरि कृतेन आन्तरिक्षान् स्वस्य सच्चिदानन्दघनब्रह्मत्वात्मना विभावनसमकालीनक्रूरदृष्टिविलोकनेन दिव्यांश्च विघ्नानुत्सार्य ।

ज्वलद्दंष्ट्राकरालान्तं सुदर्शनास्त्रं कल्पितमर्यादान्तं तन्मन्त्रेण प्रेर्य । यकारादि दशबीजैश्च

" करमध्ये तथा पृष्ठे कर्पूरे मणिबन्धके ।
कराग्रे करमूले चेत्येषा शुद्धिस्तु षड्विधा ॥ "

इति वचनोक्ताः षट् करशुद्धीरुपर्युपरि तिसृभिरभितो दशभिश्च छोटिकाभिर्दश दिशो बध्नीयात् । **अन्ये** तु उपवेशनात्पूर्वं सुदर्शनास्त्रेण दिग्बन्धः, उपवेशनोत्तरं यादिबीजैरिति द्वौ दिग्बन्धाविच्छन्ति । दिग्बन्धे सर्वत्र प्रागाद्यधोऽन्तरूपः क्रमः । दिक्पालार्चने तु ऊर्ध्वान्त इति सुदर्शनपटले **शङ्करभगवत्पादै**रुक्तम् ।

तत आत्मानमभितो वज्रशृङ्खलां समन्त्रकां, जलपरिखामग्निप्राकारत्रयं मारुतास्त्रं च परतः परतो वलयाकारं विचिन्त्य, क्षेत्रस्य पतिनेति क्षेत्रपालं नत्वा । " एभ्यो माता, " " एवा पित्रे, " इति ऋग्द्वयं पठित्वा, तीक्ष्णदंष्ट्रेति क्षेत्रपालानुज्ञां प्रार्थयेत् ।

अपक्रामन्त्वित्यनयोर्वराहो भूरनुष्टुप् । प्रार्थने विनियोगः । भूम्यै विश्वम्भरायै धात्र्यै पृथिव्यै धरण्यै उर्व्यै इति षडङ्गद्वयम् ।

"सर्वभूतनिवारणाय शार्ङ्गाय सशरायास्त्रराजाय सुदर्शनाय हुं फट्" इति सुदर्शनास्त्रम् । "ॐ तपः सत्यात्मने" इति ब्रह्मास्त्रम् । "यं रं लं वं शं षं सं हं क्षं" इति बीजानि । "ॐ नमो भगवते वज्रशृङ्खलाय नमः ।" "अग्निप्राकाराऽत्र तिष्ठ तिष्ठ स्वाहा ।" इति शृङ्खलाप्राकारौ । "यं य य य यें यं ये यं ये यं य य य यं यं यं ये यः" इति सप्तदशार्णो वायव्यास्त्रमन्त्रः ।

अपसर्पन्तु० अपक्रामन्तु० तीक्ष्णदंष्ट्र० इतीह षट्करशुद्ध्यस्त्रयोदश छोटिका इति एकोनविंशतिवारं ब्रह्मास्त्रावृत्तिः । सुदर्शनमन्त्रमिह लिखन्तस्तु भ्रान्ताः । शैवे पाशुपतास्त्रस्य, वैष्णवे सुदर्शनास्त्रस्य, तदितरेषु ब्रह्मास्त्रस्य **प्रपञ्चसारे** विनियोगोक्तेः । "ध्येयः सदा०" इति वक्ष्यमाणध्यानश्लोकादस्य कर्मणो वैष्णवत्वमिति तेषां भ्रममूलम् । ध्येयमूर्तेर्वाचनिकं शङ्खचक्रधारणं द्विभुजत्वं चेति सूर्यस्यैवैषा मूर्तिः । नारायणपदं त्वत्रापि वाचनिकं नामधेयं, शङ्खचक्रसाम्येन गौणं वा । वैकल्पिकध्यानान्तरे तु न वैष्णवलिङ्गगन्धोऽपि ।

ततो हृल्लेखायाः षड्दीर्घैः त्रिः प्राणायामं कुर्यात् । इडया षण्णां सकृदावृत्त्या पूरकः । सुषुम्णया कुम्भके चतुरावृत्तिः । पिङ्गलया रेचके द्विरावृत्तिरित्येकः प्राणायामः । ततः पिङ्गलादीडान्तमुक्तसङ्ख्ययैव द्वितीयः । प्रथमवत् तृतीयः । अयं च प्राणायामो मूलेनेत्य**न्ये** । तत्पक्षेऽप्येषैव सङ्ख्या । अथवा षोडश द्वात्रिंशदष्टरूपाः पूरकादयो । द्वात्रिंशच्चतुःषष्टिषोडशरूपा वा, केवलकुम्भकेनैव वा प्राणायामः । अथ वा सर्वत्र प्रणवेनैव सः ।

स्वस्ति श्रीपरमशिवनाथपादाद्यशेषगुरुपारम्पर्यक्रमेण यावत्स्वगुरुपादाब्जं तावत्प्रणमामीति प्रणम्य, शिरसि गुरुत्रयं, "दक्षभुजे जातवेदसे" इत्यनेन दुर्गां, वामभुजे "गणानां त्वा" इति गणपतिं, दक्षजानुनि "क्षेत्रस्य पतिना" इति क्षेत्रपालं, वामजानुनि "प्रणो देवी" इति सरस्वतीं, हृद्यात्मत्रयं, अग्रे सूर्यं च विचिन्त्य प्रणमेत् । दुं दुर्गायै नमः इत्यादिमन्त्रेण समुच्चयः । दुर्गागणपत्योर्वैपरीत्यं **केचिदिच्छन्ति** । **केचित्तु** आसनं पूर्ववदभ्यर्च्य, "अपक्रामन्तु" इति वामपार्ष्णिघातत्रयम्, "अपसर्पन्तु" इति वामपादेन भूस्पर्शं च कृत्वोपविशेदित्याहुः । भौमविघ्ननिरासे "अन्तरितं रक्षोन्तरिता अरातयः हुं फट्" इत्यपि **केचित्** पठन्ति । शिखाबन्धनादिगुर्वादि-नमस्कारान्तेषु पदार्थजातेषु क्रमव्यत्यासं नानाविधं **प्रयोगकारा** लिखन्ति ।

एतावत्कर्तुमशक्तश्चेत्, भूतप्रार्थनाऽऽसनप्रसारणोपवेशनदशदिग्बन्धक्षेत्रपालानुज्ञारूपान् पञ्चपदार्थान् कुर्यात् ।

अथात्र गायत्र्या प्राणानायम्य भूशुद्धिभूतशुद्ध्यादीन् कुर्यात् । क्वचित्तु प्रयोगे प्राणायामोत्तरं सङ्कल्पो दृश्यते । स तावदृत्विग्वरणपक्षे ऋत्विग्भिः कार्य इत्याशयेन । तैः

पूर्वमसङ्कल्पितत्वात्। अत एव तत्रास्य यजमानस्य अमुकगोत्रस्येत्यादीनामुल्लेखो दृश्यते। स्वतःकर्तृके तु प्रयोगे पूर्वं सङ्कल्पस्य वृत्तत्वान्नात्र पुनः सङ्कल्पावकाशः। आरब्धकर्माङ्गत्वेन भूभूतशुद्ध्यादिकं करिष्ये इति तु **केचित्**सङ्कल्पमाहुः।

तत्र भूशुद्धिर्बाह्यान्तरभेदाद्द्वेधा। वामपार्ष्णिघातरूपा बाह्या, सा तु वृत्तैव। आन्तरी तु मनोव्यापाररूपेण कार्या। यथा—

ब्रह्मरन्ध्रगते चन्द्रमण्डलेऽमृतवर्षिणीम्।
भवानीं भूमिशुद्ध्यर्थं भावयेदमृतेश्वरीम्।
ततस्तन्मौलिनिष्यन्दसुधाकल्लोलवृष्टिभिः।
चिन्तयेन्मग्नमात्मानं भूमिशुद्धिरियं भवेत्॥" इति।

ततो लं श्रीं क्लीं इति बीजत्रयेण षट्करशुद्धीः कुर्यात्। ये तु भूतशुद्ध्यादीन् कृताकृतानिच्छन्ति ते तु भ्रान्ताः। इह गुरुत्रयनमस्कारं पुनरपि **केचिन्**मेनिरे।

ततो "नमो महद्भ्यः" इति यथालिङ्गं मनसा प्रणमेत्। तदनन्तरं च **मातृकोपसंहारं** कुर्यात्। क्षंकारं ळंकारे संहरामि। ळंकारं हंकारे संहरामि। हंकारं संकारे संहरामि इत्यादिक्रमेण सोच्चारणध्यानविशेषरूपोऽयमुपसंहारोऽकारपर्यन्तः। अयं च कृताकृतः।

ततः शरीरस्पर्शादिकं यथास्थानं विन्यस्य मूलाधारपद्मकर्णिकास्थकुण्डलिन्या षट्चक्रेषु तत्तद्वर्णाधिदेवताप्रवसन्त्या, हृत्कमलस्थजीवकलां हंसः सोहं इति मन्त्रेण ब्रह्मरन्ध्रस्थितसहस्रदलपद्मस्थपरब्रह्मणा संयोज्य। पञ्चभूतमन्त्राणां ऋष्यादिकं न्यस्य पादजानुनाभिहृदयभ्रूमध्यब्रह्मरन्ध्राणां षण्णां मध्यभागेषु पञ्चसु पृथिव्यादितत्त्वानि यथोक्तलक्षणानि सबीजकलानि विचिन्त्य, "स्योना पृथिवी०" "अप्सु मे सोमो०" "अग्निं दूतं०" "वायोः शतं०" "आदित्प्रत्नस्य०" इति पाञ्चभौतिकमन्त्राणां ऋष्यादिन्यासपूर्वकं पूर्वपूर्वमुत्तरोत्तरस्मिन् विलापयेत्।

"अप्सु मे सोम" इति ऋगनुष्टुप् गायत्री वा। "आपश्च विश्वभेषजी"रिति चतुर्थचरणयोगायोगाभ्यामिह विकल्पता। ये तु "अप्स्वन्तरमृतमप्सु भेषज"मित्येतन्मण्डले प्रयोक्तव्यमाहुः, तेषामपि त्रेधा विकल्पः। "अप्स्वन्तरमप्सु भेषजमपामृतप्रशस्तये देवा भवत वाजिनः", इति **बह्वृचाः** पुरउष्णिक्त्वेन द्वितीयाक्षरे कम्पेन प्रशस्तय इत्यत्रावसानेन च विशिष्टां ऋचं पठन्ति। **तैत्तिरीया याजुषास्तु** निष्कम्पां निरवसानाम्। **शौनकीया आथर्वणास्तु**पुरस्ताद् बृहतीत्वेन प्रथमचरणेऽवसानेन द्वितीयादिचरणत्रये तदभावेन पाठभेदेन च पठन्ति। यथा। "अप्स्वन्तरमृतभेषजम् अपामृतप्रशस्तिभिरश्वा भवत वाजिनो गावो भवत वाजिनीः" इति। अम्मण्डलादित्रये "त्वं नो अग्ने अग्नी रक्षांसि सेधसि आव्रातवाही"ति योजयन्ति **केचित्**।

आकाशोत्तरं पञ्चतन्मात्रा अहङ्कारो महत्तत्त्वं परब्रह्मेति पञ्च ब्रह्मरन्ध्रावकाशे उपर्युपरि सूक्ष्मसूक्ष्मतरसूक्ष्मतमादिरूपान् विचिन्त्य उत्तरोत्तरं विलाप्य वामकुक्षौ दक्षकुक्षौ वा पापपुरुषं विचिन्त्य वाय्वग्नितोयबीजैर्दहनादिकं कृत्वा सिसृक्षया ब्रह्मादिपुरुषान्तं निर्माय कुण्डलिनीमवतार्य तत्तद्वर्णदेवताजीवान् यथास्थानं स्थापयेत्। अत्रत्यो विस्तरः प्रयोगकाले व्यक्तो भविष्यति।

एतावदशक्तौ लं वं यं रं हं इति पाञ्चभौतिकबीजैः उक्तान्यतमरीत्या प्राणायाममात्रं कुर्यात् इति **साम्प्रदायिकाः**।

**ततः प्राणप्रतिष्ठा**। पाशलज्जाङ्कुशैः प्राणानायम्य प्राणप्रतिष्ठामन्त्रस्य ऋष्यादिन्यासत्रयं विधाय, देवतां मनसाऽभ्यर्च्य, हृदि शिरसि वा हस्तं दत्वा त्रिः सकृद्वा तन्मन्त्रं पठेत्। मन्त्रश्च तन्त्रभेदाद्यद्यपि बहुप्रकारस्तथाऽपीह **बृहत्तन्त्रकौमुद्यनु**सारेण लिख्यते। "पाशो लज्जाऽङ्कुश"—इत्यादि सप्तकं सबिन्दुकं हकारस्त्रयोदशस्वरयुक्तः सबिन्दुकः, ॐ क्षं सं हंसः ह्रीं ॐ इति सप्ताक्षरी हंसः इति पदं इति विंशत्यक्षराणि मम प्राणा इह प्राणाः। पुनर्विंशत्यक्षराणि मम जीव इह स्थितः। पुनर्विंशत्यक्षराणि मम सर्वेन्द्रियाणि। पुनर्विंशत्यक्षराणि मम वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। अन्ते पुनः सप्ताक्षरी। एवं नवभिः खण्डैरष्टत्रिंशदुत्तरं शतं वर्णाः। अन्तिमां सप्ताक्षरीं **केचिन्ने**च्छन्ति। तेन **तन्मते** एकत्रिंशदुत्तरं शतं वर्णाः।

ततः पञ्चदशवारं प्रणवमावृत्य पञ्चदशसंस्कारान् विभावयेत्। ते च गर्भाधानपुंसवनसीमन्तोन्नयनविष्णुबलिजातकर्मनामकरणनिष्क्रमणान्नप्राशनचौलकर्मोपनयनवेदव्रतचतुष्टयस्नानोद्वाहाः। इति पञ्चदश संस्काराः।

एतावदशक्तौ **ज्ञानार्णवोक्तं** त्र्यक्षरमन्त्रमात्रं, हृदि हस्तं न्यस्य पठेत्। स च "आं सोहम्" इति।

अथ **मातृकान्यासः**। स च आन्तरो बाह्यश्चेति द्वेधा। बाह्योऽपि त्रिविधः। सृष्टिस्थितिसंहारभेदात्। तत्र मातृकाशब्देन अकारादिक्षकारान्ता वर्णाः। तेषामान्तरस्तु मूलाधारादिषट्चक्रदलेषु एकैकवर्णस्य विभावनरूपो न्यासः। तत्राऽयं श्लोकः—

आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे
द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्धे चतुष्के।
वासान्ते बालमध्ये डफकठसहिते कण्ठदेशे स्वराणां
हं क्षं तत्त्वार्थयुक्तं सकलबुधनुतं वर्णचक्रं नमामि ॥ १ ॥

अस्यार्थः। आधारादिस्थलषट्के मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धयाज्ञानामकानि चक्रपदवाच्यान्यपि पद्माकृतिमन्ति षट् सन्ति। तेषामान्तरस्थानानि प्रथमचरणेनोक्तानि।

तत्राधारपदेन गुदाद्‌द्व्यङ्गुलोर्ध्वं स्थानम्। द्वितीयचरणेन विपरीतक्रमेण तत्पद्मानां दलसङ्ख्याकथनम्। तत्र द्विदशपदं द्वादशपरं, द्वादशार्धपदं षट्परम्। तृतीयचरणेन तद्दलेषु न्यस्यमानानां वर्णानां प्रत्याहारन्यायेनाधारादिक्रमेणोक्तिः। हं क्षमित्याज्ञाचक्रे। तत्त्वं जीवब्रह्माभेदः। स एवार्थो यस्य मन्त्रस्य स तत्त्वार्थो "हंसः सोहम्" इति मन्त्रः। तद्युक्तं सकलमपि वर्णं न्यसेत्। तत्र विशेषस्तृतीयचरणगतैः अन्तादिपदैः। वकारादिसकारान्तवर्णचतुष्कं पूर्वादिक्रमेण न्यस्य तदन्ते तत्त्वार्थमन्त्रं दलचतुष्टये न्यसेत्। बकारादिलकारान्तवर्णषट्कस्य मध्ये तं मन्त्रं न्यसेत्। बं नमः, भं नमः मं नमः इति दलत्रये न्यस्य पुनः प्रथमदलमारभ्य "हंसः सोहम्" इति मन्त्रं दलषट्केऽपि विन्यस्य चतुर्थादिदलत्रये यं नमः रं नमः लं नमः इति न्यसेदित्यर्थः। डादिफान्तानां कादिठान्तानां च साहित्यमेव विवक्षितम्। "डं नमः हंसः सोहं", "ढं नमः हंसः सोहम्", इत्यादि क्रमेण न्यासः। एवमेव स्वराणां हक्षयोश्च न्यासः। **केचित्** तु, वकारादिचतुष्टयं विन्यस्य तदन्ते सकृदेव "हंसः" इति मन्त्रो न्यस्तव्यः। एवं वकारादित्रयं विन्यस्य "हंसः" इति सकृदेव विन्यस्य, यकारादित्रयं विन्यसेदिति वदन्ति। तत्पक्षे तत्त्वार्थस्य कस्मिन् दले न्यास इति तत्सम्प्रदायादेव ज्ञातव्यम्। विनिगमनाविरहो दलाष्टके तत्त्वार्थशून्यता चेति दोषस्तु स्पष्ट एव। वासान्तादिशब्दाश्च क्रमपराः। वकारादिचतुष्टयन्यासस्यान्ते स मन्त्रो न्यस्यते यस्मिन् तत् इति व्युत्पत्तिः। "एहीडादयोन्यपदार्थे" इति समासः। आधारे चतुष्के इत्यन्वयः। लिङ्गसहिते नाभौ इति मध्यमपदलोपी समासः। आधाराधिकरणकचतुर्दलकमले इत्यर्थः। तस्य वासान्ते इति विशेषणम्। एवमाधारे चतुष्के वासान्ते इति पदेष्वन्यतमं विशेष्यम, इतरे विशेषणे। चतुष्क इति वा विशेष्यम्। एवं षोडशारे इत्यस्य तालुनो मूलभूतः कण्ठ एव देशो यस्येति विशेषणे। स्वराणामिति षष्ठ्याः सम्बन्धसामान्यवाचित्वात् स्वरसम्बन्धिनि इत्यर्थः। अवशिष्टानां तु विशेष्यविशेषणभावः शब्दमर्यादया न सम्भवति। स्थानप्रतिपादकेषु पदेषु लिङ्गनाभाविति स्वाधिष्ठानमणिपूरयोः समासेन, अनाहतस्य च हृदयसरसिजपदेन पार्थक्येन निर्देशात्। दलसङ्ख्यावर्णविन्यासप्रतिपादकपदेषु तु मणिपूरानाहतयोः समासेन स्वाधिष्ठानस्य पार्थक्येन निर्देशात्। ललाटे द्वे पत्रे हं क्षमित्येतेषां तु भिन्नविभक्तित्वे न तदयोगः। तस्मादेवमन्वयः। स्थितमिति शेषः। सप्तम्या वा तल्लाभः। तस्मिन् स्थितं वर्णचक्रं अहं नमामीत्यन्वयः। तस्मिन् कस्मिन् इत्यपेक्षायां आधारादीनां खलेकपोतन्यायेन सम्बन्धः। ललाटे ये द्वे पत्रे तयोः स्थितं हं क्षमिति तु वर्णचक्रस्यैव विशेषणम्। यत्तदोः पूरणेन। एतेषु स्थलेषु यथाशास्त्रमन्वयवशो विभज्य स्थितमित्यर्थः।

**केचित्तु**, हकारस्य सर्वप्रकृतिभूताकाशबीजत्वाद्दलाधारकर्णिकासु न्यास आज्ञाचक्रे ळकारस्यैव पाठोऽपि ळं क्षमित्येवेत्याहुः, तन्न। षोढान्यासान्तर्गतयोगिनीन्यासे तत्तद्वर्णादिवर्णकनामभिरेव न्यासे सति, हंसवतीक्षमावत्योरेव आज्ञाचक्रे न्यासविधानेन ळकारादिनामकयोगिन्यास्तत्रादर्शनादिति दिक्।

"आधारे लिङ्गनाभावित्येतच्छ्लोकार्थ ईरितः ।
सम्प्रदायानुसारेण विदाङ्कुर्वन्तु तद्बुधाः ॥"

अस्मिंश्च श्लोके व्युत्क्रमेण चक्रस्वरूपकथनेऽपि मातृकाक्रमेणैवायं न्यासः कर्तव्यः ।

ततः स्वरैः पूरकं स्पर्शैः कुम्भकं यादिदशकेन रेचकं, एवं प्राणायामं त्रिः कुर्यात् ।

बाह्याङ्गेषु वर्णानां भावनं बहिर्मातृकान्यासः । तत्र **सृष्टिर्नाम** सर्वेषां वर्णानां विसर्गसाहित्यम् । षोडशस्वरे तु द्विर्विसर्गोच्चारणम् । अहहेत्येतत्समानाकारम् । **स्थितिर्नाम** बिन्दुविसर्गसाहित्यम । तत्रापि बिन्दोः प्रथममुच्चारणम् । "बिन्दुविसर्गसाहित्ये प्रथमं बिन्दुमुच्चरेत्" इति वचनात् । षोडशस्वरे तु बिन्दोर्विसर्गसन्दंशः । **संहारो** नाम बिन्दुमात्रसाहित्यम् । षोडशस्वरे त्वादौ विसर्गस्ततो बिन्दुरिति विशेषः । संहारे क्षादिरान्तः क्रमः । सृष्टौ त्वकारादिक्षान्तः । स्थितौ डकारादि ठकारान्तः । स्थानानि तु त्रिष्वपि तत्तदक्षराणां तानि तान्येव ।

वर्णिनां संहारः स्थितिः सृष्टिरिति क्रमः । गृहस्थानां तु संहारः सृष्टिः स्थितिरिति क्रमः । वनिनां यतीनां च सृष्टिः स्थितिः संहार इति क्रमः । **केचित्तु** गृहस्थानां सृष्टिः स्थितिः संहारः सृष्टिः स्थितिरिति पञ्चन्यासानाहुः । तत्र **केचित्** अं ललाटाय नमः, आं मुखवृत्ताय नमः इत्यादि न्यस्यमानं स्थानमुल्लिखन्ति । **अन्ये** तु अन्तर्मातृकान्यासे अं विशुद्धिचक्रप्रथमदलाय नमः इत्यादि क्रमेण न्यासस्य तेषामप्यसम्मतत्वात् अं नमः इत्याद्येव न्यास, इति स्थलोद्वारमुपेक्षन्ते ।

अत्र च **तन्त्रान्तरे** मुद्रा उक्तास्ता उच्यन्ते । ललाटे मध्यमाऽनामाभ्याम् । मुखवृत्ते तर्जनीमध्यमाभ्याम् । नेत्रयोरनामातर्जनीभ्याम् । कर्णयोरङ्गुष्ठाग्रेण । नासयोः कनिष्ठाङ्गुष्ठाभ्याम् । कपोलयोर्मध्यमया । ओष्ठयोर्दन्तपङ्क्त्योश्चानामिकया । शिरसि मध्यमया । आस्येऽङ्गुष्ठेन । ककारादिबकारान्तेषु त्रयोविंशतिस्थानेषु कनिष्ठिकादित्रयेण । भकारे निस्तर्जनीभिरङ्गुलीभिः । मकारे पञ्चाङ्गुल्यग्रैः । यकारादिदशके हस्ततलेन । तत्रापि यकारादिचतुष्के शकारे च वामहस्तोऽन्यत्र दक्षिणः । अन्तर्मातृकान्यासे अन्यत्र च कनिष्ठाङ्गुष्ठयोगेन न्यासः ।

एतावदशक्तौ । अञ्जलिस्थान् मातृकावर्णान् विचिन्त्य संहारक्रमेणोच्चार्य शीर्षादिपादान्तं व्यापकं न्यस्य तत्तत्स्थाने तत्तद्वर्णान् भावयेत् । एवं सृष्टिस्थितिक्रमेणोच्चार्य पुनर्द्विः कुर्यात् ।

अस्य च भूतशुद्ध्यादिमातृकान्यासान्तस्य एकदिनक्रियमाणकर्माणि प्रति तन्त्रेणोपकारत्वात् कर्मान्तरारम्भे न पुनः पुनः करणम् ।

इह भूतशुद्ध्यादिमातृकान्यासेषु केचिद्विशेषा विचार्यांशाभावादिह न लिखिताः । प्रयोगलेखनावसर एव तु व्यक्तीकरिष्यन्ते । इति दिक् ।

**॥ इति तान्त्रिकसामान्याङ्गनिर्णयः ॥**

ततो विशेषाङ्गभूतान् न्यासान् कुर्यात् । तत्रादौ सङ्कल्पं कुर्यादिति **केचिदा**हुस्तन्न । सकृत्कृतस्यैवाङ्गत्वोपपत्तौ वाऽऽवृत्तौ मानाभावात् । अथेहैव कर्तव्यमिति मतिः तदपि न । " सङ्कल्प्य विधिवत्कुर्यात्स्नानदानव्रतादिकम् । " इति **मार्कण्डेय**वचनस्य यथासाङ्गप्रयोग-पूर्वकालीनत्वस्यैव सिद्धेः । " उदकान्ते समासीन " इति **पूर्वोक्तवचन**विरोधाच्च । अत एव " प्राणानायम्य कुर्वीत सर्वकर्माणि संयतः " इति एतदुत्तरमेवेदं वचनमुट्टङ्कितं **शान्तिमयूखे**। " प्राणान्निरुध्य सङ्कल्प्य पूजाद्रव्याणि शोधयेत् " इति **भविष्योत्तरे** स्पष्टमुक्तं च। आचारोऽपि तथैव दृश्यते ।

ततस्तृचस्य ऋष्यादीन् प्रथमान्तपदैरुच्चरन् स्मृत्वा तृचेन सोदकेन पाणिना अङ्गान्य-भिमृश्य गुरुत्रयं नत्वा तृचस्य ऋष्यादीन् यथास्थानं न्यसेत् । अत्र च नेत्रतत्वे अधिके । तेऽपि नाभावेव न्यस्तव्ये । स्वरं तु कण्ठे । एवं ये ये तृचघटिता न्यासविशेषास्तेषां तेषामारम्भे पुनः पुना ऋष्यादिन्यासः कार्यः । विनियोगस्तु अमुकन्यासे विनियोग इति विशिष्य वक्तव्य इत्याहुः । **करशुद्ध्यादिन्यासेषु विनियोग इत्युक्त्या तत्रैव तन्त्रेण सकृत्प्रयोग इति वयम् ।**

ततः

" करशुद्धिं विधायादौ पश्चादर्घ्यं समाचरेत् ।
अकृत्वा करशुद्धिं तु सकलं निष्फलं भवेत् ॥ "

इति वचनात् आदौ करशुद्धिन्यासः कर्तव्य इति **केचित्** । अर्घ्यदानादव्यवहितपूर्वमेवायं न्यासो वचनस्वारस्याल्लभ्यते, इति तु **वयम्** । ल्यपा बोधितस्य आदौपश्चाद्भावस्य 'आदौ पश्चात्' इति पदाभ्यां पुनः कथनेनाङ्गान्तरकृतव्यवधानाभावे तात्पर्यावसायात् । " दैवतान्यवदाय न तावत्येव होतव्यमैडान्यवद्यति " इत्यत्र " न तावत्येव होतव्यम् " इत्यंशेन दैवतैडाऽवदानयोर्ल्यब्बोधित-पौर्वापर्यस्य मध्ये होमेन व्यवधानेऽपि अनपायज्ञापनेन तन्निवारणेनैव सार्थक्यस्य वर्णनात् ।

तत्र (करशुद्धिन्यासे) मणिबन्धः प्रकोष्ठो हस्तः कूर्परं करतलं करपृष्ठं चेति षडङ्गानि वामदक्षिणभेदेन द्विगुणानि द्वादश भवन्ति । तत्र प्रणवो हृल्लेखाषड्दीर्घान्तर्गतमेकैकं बीजं मित्रादिकमेकैकं नाम चतुर्थीनमोऽन्तमुच्चार्य दक्षिणान् मणिबन्धादीन् अर्धार्धर्चेन स्पृष्ट्वा, अवशिष्टार्धर्चेन वामान् मणिबन्धादीन् स्पृशेत् । षड्दीर्घाणां तु द्विरावृत्तिर्भवति । **येषां मते** न्यासाधिकरणाङ्गस्याऽप्युल्लेखस्तेषां **मते** चतुर्थ्यन्तनामोत्तरं चतुर्थ्यन्ताङ्गवाचकपदान्तो नमः

शद्वः। यथा। ॐ ह्रां उद्यन्नद्य मित्रमहः मित्राय दक्षिणमणिबन्धाय नमः इत्यादि प्रयोगवाक्यम्। केचित्तु दक्षिणादिमणिबन्धषट्के एकैकमर्धं नामद्वितयं अङ्गविशेषवाचकपदं ङेनमोऽन्तं विन्यस्य पुनस्तान्येवार्धानि तान्येव नामद्वितयानि च तादृशानि वाममणिबन्धादिषु विन्यस्यन्ति। केचिच्च षड्दीर्घानिह न मेलयन्ति।

॥ इति करशुद्धिन्यासः ॥

ततो द्वादशाङ्गन्यासं कुर्यात्। तदुक्तम्—

उद्यन् दक्षिणहस्ते मां कृतान्मित्रोऽभिरक्षतु।
आरोहन् वामहस्ते मामकृताद्रक्षताद्रविः॥

हृद्रोगं हृदये सूर्यो ज्ञानाद्रक्षत्वनामयम्।
हरिमाणं मूर्ध्नि भानुर्भूतेभ्यः सर्वतोऽवतु॥

शुकेषु दक्षिणे पादे गमनाद्रक्षतात्खगः।
रोपणाकासु वामे मां पूषा रक्षत्वनागतात्॥

अथो नाभौ तमो जाड्याद्धिरण्यगर्भकोऽवतु।
हरिमाणं तु जिह्वायां मरीचिः सर्वतोऽवतु॥

उद्दक्षिणे च नेत्रे मामादित्योऽवतु वीक्षणात्।
विश्वेन वामनेत्रे मां सविताऽवत्ववीक्षणात्॥

द्विषन्तं कवचं मां त्वग्रोमाण्यर्कोऽभिरक्षतु।
मो अहं मां दिग्विदिक्षु रक्षत्वस्त्रेण भास्करः॥

इति।

अस्यायं साम्प्रदायिकोऽर्थः। आदौ प्रणवस्तत उद्यन्नित्येकः पादः ततो दक्षिणहस्ताय नमः इत्युल्लेखो न वा केषाञ्चित्। पश्चात्प्रतिषिद्धकरणान्मित्रो रक्षतु मामिति वाक्यं पठित्वा दक्षिणहस्ते विन्यसेत्। कृतं प्रतिषिद्धविषयकमेव पापजनकम्। अकृतं विहितविषयकमेव तथेति योग्यतावशाद्विहितप्रतिषिद्धपदयोः शेषपूरणम्। एवं गमनागमनादावपि। हृद्रोगं ममेत्यत्र सूर्यो ज्ञानाद्रक्षत्वनामयं करोतु मामिति। सर्वत इति भूतविशेषणम्। मूर्ध्नि इत्यस्य शिरसे स्वाहेति। पठेदित्यर्थ इति केचित्। मूर्ध्ने नम इत्येवार्थ इत्यन्ये।

हस्तयोर्हृदये मूर्ध्नि पादनाभिमुखे तथा।
चक्षुषोः कवचास्त्राख्यं पादशः क्रमतो न्यसेत्॥

इति **भविष्यवाक्ये** हस्तादिप्रायपाठेन मूर्ध्नः सप्तम्यन्तत्वेनोल्लेखाच्चैतदेव युक्तम् । कवचास्त्र-पदयोस्तु सप्तम्यन्तताऽभावात् जातियोगबोधकत्वमिति विशेषः । हृदये त्वर्थवशात्सम्पन्नजाति-समानजातीयं वाक्यमिति न तेन भ्रमितव्यम् । हरिमाणं तु जिह्वायामिति मुखाय नमः प्रतिषिद्ध-जिह्वाव्यापारात् सर्वतो मरीची रक्षतु मामिति । सर्वभूतेभ्य इतिवत् सर्वजिह्वाव्यापारादिति युक्तम् । सर्वत इत्यनेन प्रतिषिद्धानां भक्षणचुम्बनवचनादीनां सङ्ग्रहः । द्विषन्तमिति पदोत्तरं कवचाय हुं इति पठेदिति सूचनाय कवचपदम् । एवमेवोत्तरत्रास्त्रपदेनास्त्राय फट् इत्यपि पाठः सिध्यति । तत्र च दिग्विदिग्भ्यो भास्करो रक्षतु मामिति प्रयोगः । दिग्देशेभ्य **इत्यन्ये** । दिग्देवताभ्य **इत्यपरे** । अत्र प्रणवोत्तरं लज्जाया एकैकं दीर्घमपि **केचिद्यो**जयन्ति । **परे** तु ॐ ह्रां उद्यन्मित्राय नमः दक्षिणहस्ते मां रक्षत्वित्यादि प्रयुञ्जते । **केचित्तु** दक्षिणहस्तप्रतिषिद्धकरणात् मित्रो रक्षतु माम् इति प्रयुञ्जते । आदौ सर्वत्र तारमामायाबीजानि, ॐ ह्रीं श्रीं इति, योजयन्ति च । कवचपदं तु द्विषन्तमिति पादेनैवोल्लिखन्ति । मो अहमित्यत्र तु अस्त्रेण भास्करो रक्षतु मामिति प्रयुञ्जते । तदयथातथम् । ये तु प्रणव आदौ तत एकैको लज्जादीर्घः तत एकैकस्तृ-चपादः तत एकैकं नाम ङेनमोऽन्तं ततस्तदेव नाम द्वितीयान्तं ततोऽङ्गविशेषवाचकपदं सप्तम्यन्तं ततो न्यसामीति क्रियापदं, ततः पूर्वोक्तषट्श्लोकसम्बन्ध्येकैकमर्धम् । यथा ॐ ह्रां उद्यन्नद्य मित्रमहः मित्राय नमः मित्रं दक्षिणहस्ते न्यसामि उद्यन्दक्षिणहस्ते मां कृतान्मित्रोऽभि-रक्षत्विति । कवचपदस्थले त्वकं कवचत्वग्रोमसु न्यसामीति प्रयोगः, एवमस्त्रं दिग्विदिक्ष्विति वदन्ति, ते विधिवाक्यानां क्वचित्क्रमादिबोधकत्वस्वीकारेऽपि मन्त्रवत् प्रयोगसमवेतार्थस्मारकत्व-स्यानङ्गीकरणेन अनन्वितत्वेन च विधिवाक्यप्रयोगस्य अयुक्तत्वादुपेक्ष्याः ।

## ॥ इति द्वादशाङ्गन्यासनिर्णयः ॥

ततः पादषडङ्गन्यासोऽर्धर्चषडङ्गन्यास ऋक्षडङ्गन्यासो बीजषडङ्गन्यासो नामषडङ्ग-न्यासो हंसषडङ्गन्यासो मणिकुम्भषडङ्गन्यास इति सप्तविधषडङ्गन्यासं कुर्यात् ।

( १ ) तत्राऽऽद्यो यथा—आदौ प्रणवस्तत एकैकस्तृचपादस्तत एकैकं मित्रादिकं नाम चतुर्थीनमोऽन्तं ततोऽङ्गुष्ठाभ्यां नम इत्यादयो जातयः । एवं सार्धर्चेन करन्यासः । अथो हारिद्रवेष्वित्यादिना सार्धर्चेन हिरण्यगर्भादिनामसहितेन हृदयादिन्यासः । अत्र लज्जा-षड्दीर्घान् द्विरावृत्तान् पादादिभागे **केचिदिच्छन्ति** । **अन्ये** तु नामादौ पठन्ति ।

( २ ) द्वितीयो यथा—आदौ प्रणवस्ततो रमाबीजस्य षड्दीर्घाणामेकैकं ततस्तृ-चार्धमेकैकं ततो द्वे नामनी ङे नमोऽन्ते ततो जातयः । यथा ।

ॐ श्रां उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवं मित्ररविभ्यां नमः, अङ्गुष्ठाभ्यां नमः ।

इत्यादिप्रयोगः । एवमेतैरेव मन्त्रैर्हृदयादिजातियुक्तै दादिषु न्यसेत् ।

**केचित्तु** रमाषड्दीर्घस्थाने लज्जाषड्दीर्घानिच्छन्ति । **अन्ये** तु प्रणवयुक्तान् लज्जाषड्दीर्घान् जात्यादावेव पठन्ति । ॐ ह्रां अङ्गुष्ठाभ्यां नमः इत्यादिकस्तेषां क्रमः । **अपरे** त्वत्र प्रणवातिरिक्तबीजयोजनामेव मन्यन्ते । **परे** त्वाहुः—आदौ प्रणवस्ततो द्वौ द्वौ लज्जादीर्घौ तत एकैकमर्धं द्वे द्वे नामनी नमोऽन्ते पुनस्ते एव द्वितीयान्ते ततोऽङ्गुष्ठयोर्न्यसामीति वाक्यानि । अनामिकादित्रये पुनः पूर्ववदेव दीर्घयुगलम् । यथा । ॐ ह्रां ह्रीं उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवं मित्ररविभ्यां नमः मित्ररवी अङ्गुष्ठयोर्न्यसामीत्यादिप्रयोगः । हृदयादि षडङ्गे तु बीजान्यन्ते देयानि । शेषं पूर्ववत् । यथा । ॐ उद्यं० दिवं मित्ररविभ्यां नमः हृदयाय नमः ह्रां ह्रीं, इत्यादिप्रयोगः । नात्र मित्ररवी हृदये न्यसामीत्यादिरूहोऽपि तु यथाजाति वाक्यमेवेति ।

( ३ ) अथ तृतीयो न्यासः—द्विरावृत्तेन तृचेन कार्यः । आदौ प्रणवस्तत एकैका ऋक् चत्वारि चत्वारि नामानि ङेनमोऽन्तानि जातयश्चेति क्रमः । एवं हृदयादिष्वपि । अत्र ऋगादावेकैकं दीर्घं **केचिद्यो**जयन्ति । **केचित्** द्वौ द्वौ द्विरावृत्तौ ।

( ४ ) चतुर्थस्तु—ॐ ह्रां अङ्गुष्ठाभ्यामित्यादिः सप्रणवो निष्प्रणवो वा । एवं हृदयादि ।

( ५ ) पञ्चमस्तु—प्रणवो नामद्वयं ङेनमोऽन्तं जातयश्चेत्येवंरूपः । एवं हृदयादिष्वपि ।

( ६ ) षष्ठस्तु—प्रणवोत्तरं हंसपदस्य षड्दीर्घाणां यथाक्रमं योजनया जातियोजनया च भवति ।

( ७ ) सप्तमस्तु—'सत्यतेजस' इत्यादिवक्ष्यमाणमणिकुम्भमन्त्रेण सत्यपदस्थानीयैर्ब्रह्मविष्णुरुद्राग्निसर्वपदैः षड्विधैः पल्लवोपेतैः कार्यः । तदादौ च तारमायारमातारान् **केचिद्यो**जयन्ति । **अन्ये** पुनस्तारं मायादीर्घाणामेकैकं च वदन्ति । **परे** त्विमं न्यासं वक्ष्यमाणकवचन्यासोत्तरकालीनम् इच्छन्ति । हंसषडङ्गन्यासं चाक्षरषडङ्गन्यासोत्तरञ्च । **केचित्** तु यत्पुरुषं व्यदधुः इति अतो देवा अवन्तु न इति च द्वाभ्यां षड्ऋग्वर्णाभ्यां द्वौ षडङ्गन्यासावधिकाविति नवषडङ्गीमाहुः ।

## ॥ इति सप्तषडङ्गी ॥

## ॥ अथ भास्करादिनामन्यासः ।

भास्करो रविर्भानुर्जगच्चक्षुः खगो भानुमांस्तिमिरनाशनो जातवेदाः कालात्मोग्ररूपस्तेजोरूपो रक्षोविनाशनः सूक्ष्मगणपतिः स्थूलगणपतिश्चेति चतुर्दशनामानि । प्रणवाद्यानि

ङे‍नमोऽन्तानि शिखाललाटभ्रूमध्यचक्षुर्मुखकण्ठस्तननाभिकटिगुह्यजङ्घागुल्फदक्षिणपादवामपादे न्यसेत् । तत्र, ‘ ॐ भास्कराय शिखायै नमः ’ इति वा ‘ ॐ शिखायां भास्कराय नमः ’ इति वा प्रयोगः ।

**केचिदिह** रविस्थाने सूर्यमाहुः । **अन्ये** तु रवेरुत्तरं खगभानुमन्तौ पठित्वा मुखकण्ठे न्यस्य भानुजगच्चक्षुषौ भ्रूनेत्रयोर्न्यस्यन्ति । **परे** तु रक्षोविनाशनं सूक्ष्मगणपतिञ्च परिहृत्य द्वादशाङ्गमेव न्यासं मन्यन्ते । **तन्मते** स्थूलगणपतिः पादद्वयेऽपि चक्षुरादिवन्मिलित्वा न्यस्तव्यः । क्वचित्तु प्रयोगे पादयोः प्रभाकरस्य न्यासो दृश्यते । स च कवचन्यासान्तर्गत इह प्रमादपतित इति द्रष्टव्यम् ।

**॥ अथ कवचन्यासः ॥**

अर्कं तु मूर्ध्नि विन्यस्य ललाटे तु रविं न्यसेत् ।
विन्यसेन्नेत्रयोः सूर्यं कर्णयोश्च दिवाकरम् ॥

नासिकायां न्यसेद्भानुं मुखे वै भास्करं न्यसेत् ।
पर्जन्यमोष्ठयोश्चैव तीक्ष्णं जिह्वान्तरे न्यसेत् ॥

सुवर्णरेतसं कण्ठे स्कन्धयोस्तिग्मतेजसम् ।
बाह्वोस्तु पूषणं न्यस्य मित्रं वै पृष्ठतो न्यसेत् ॥

अरुणं दक्षिणे हस्ते त्वष्टारं वामतः करे ।
हस्ताङ्गुलौ घृणिं चैव भानुमन्तं हृदि न्यसेत् ॥

उदरे तु यमं विद्यादादित्यं नाभिमण्डले ।
कट्यां तु विन्यसेद्धंसं रुद्रमूर्वोस्तु विन्यसेत् ॥

जान्वोस्तु गोपतिं न्यस्य सवितारं तु जङ्घयोः ।
गुल्फयोश्च विवस्वन्तं पादयोश्च प्रभाकरम् ॥

बाह्यतस्तु तमोध्वंसी खगमभ्यन्तरे न्यसेत् ।
सर्वाङ्गे तु सहस्रांशुं दिग्विदिक्षु भगं न्यसेत् ॥

तमोध्वंसीत्यत्र ‘ न्यस्तव्य ’ इति शेषः । **क्वचित्तु** भानुमतः स्थाने अंशुमान्, तमोध्वंसिस्थाने जगच्चक्षुश्च पठ्यते ।

तत आदौ प्रणवेनान्ते मायादीर्घेण च सम्पुटितानर्धर्चान् शिरसे नम इत्यादिपदैः पल्लवितान् शिरोमुखहृदयनाभिजानुपादे न्यसेत् । अयं च **देहाङ्गन्यास** इति समाख्यायते ।

ततस्तृचाक्षरैर्न्यासं कुर्यात्। तानि च अनुष्टुप्त्रयमेलनेन षण्णवतिर्भवन्ति। यद्यपि तृतीयपादे सप्तैवाक्षराणि, इति प्रथमाया ऋचो निचृदनुष्टुप्त्वं युक्तं, "ऊनाधिकेनैकेन निचृद्भूरिजौ" इति **पैङ्गलात्**, तथाऽपि सूर्यपदे विकर्षेण रेफोत्तरं इकारयोजनयाऽक्षरत्रयं सम्पादनीयमित्यदोषः। अत एव 'घृणिः सूर्य आदित्य' इति सौराष्टाक्षरगणना श्रुतौ अनयैव दिशाऽऽम्नायते।

"घृणिरिति द्वे अक्षरे, सूर्य इति त्रीणि, आदित्य इति त्रीणीति"।

निचृच्छास्त्रन्तु विकर्षासम्भवे द्रष्टव्यम्।

अत एव प्रसिद्धगायत्रीमन्त्रे "वरेण्य"पदे णकारे विकर्ष एव, न निचृत्त्वमित्यादिकं **छन्दःकौस्तुभे** "इष्ट्यादि पूरण" इति सूत्रेण प्रपञ्चितमस्माभिः।

**अथ षण्णवतिस्थानसङ्ग्रहः—**

शिखा च ब्रह्मरन्ध्रं च ललाटं मुखमक्षिणी।
गण्डकर्णभ्रुवां युग्मं भ्रूमध्यं नासिकाद्वयम्॥

ओष्ठौ द्वौ दन्तपङ्क्ती द्वे जिह्वा तालूपजिह्विका।
स्कन्धौ द्वौ भुजमूले द्वे द्वौ भुजौ कूर्परद्वयम्॥

मणिबन्धद्वयं हस्तद्वयमङ्गुलयो दश।
नखाग्रपङ्क्तिद्वितयं तलयोः पृष्ठयोर्द्वयम्॥

कण्ठद्वयं घण्टिकैका स्तनौ हृत् पार्श्वयोर्युगम्।
जठरं पृष्ठभागश्च नाभिर्गुह्यं च जानुनी॥

जङ्घयोर्गुल्फयोर्युग्मं पादावङ्गुलयो दश।
नखाग्रपङ्क्तिद्वितयं तलयोः पृष्ठयोर्युगम्॥

मूलाधारादयः पद्माः सप्त पद्माटवीयुताः।
प्राणानामिन्द्रियाणाञ्च दशके द्वे मनांसि च॥

इत्थं षण्णवतिस्थानेष्वक्षराणि न्यसेत्क्रमात्।
नेत्रादौ दक्षिणं पूर्वमोष्ठादावूर्ध्वमादिमम्॥

अत्र "वा पुंसि पद्मं" इति कोशात्पुल्लिङ्गता। पद्माटवी सहस्रारं पद्मम्। प्राणदशकमिन्द्रियदशकं मनश्चतुष्टयं चैकैकं स्थानम्।

**केचित्तु,** हस्तपादाङ्गुलीषु दक्षिणाङ्गुष्ठादितत्पृष्ठान्तं विन्यस्य वामाङ्गुष्ठादिकं न्यस्यन्ति । अङ्गुष्ठद्वयोत्तरं तर्जनीद्वयमित्यादिक्रमस्तु युक्तः । **अन्ये** तु, कराङ्गुलिष्वेकैकमक्षरं अङ्गुष्ठादिक्रमेण द्वये द्वये विन्यस्य षष्ठमक्षरं करतलकरपृष्ठचतुष्केऽपि विन्यस्य तदग्रिमषडक्षराणि हृदयाद्यस्त्रान्तं जातियोगेन न्यस्यन्ति । **अन्ये** पुनः करपृष्ठोत्तरं जान्वादिपादपृष्ठान्तं ततः कण्ठादिगुह्यान्तं ततश्चक्राणीति क्रमं वर्णयन्ति ।

इह, आदौ प्रणवस्ततं एकैकं तृचाक्षरं सानुस्वारं ततः स्थानवाचकपदं चतुर्थ्यन्तं, न वा, ततो नमः शब्दश्चेति मन्त्राः । कनिष्ठाङ्गुष्ठयोगरूपमुद्रा ।

**ततः पुरुषसूक्तन्यासः ।**

करपदजानुकटिद्वयनाभिषु हृदये गले बाह्वोः ।
वदनभ्रूमध्यशिरोमध्ये न्यासस्तु पुरुषसूक्तर्चाम् ॥ १ ॥

अत्र, करादौ वाम आदिभूत इति **सम्प्रदायः** ।

**केचित्तु,** पञ्चदशीमृचं नेत्रयोर्न्यस्यन्ति । **अन्ये** त्वाहुः, अयं न्यासः पूजाकाले प्रतिमाङ्गेषु मुख्यः, तदभावे देवाभिन्नत्वेन भावितस्य स्वदेहे गौण इति ।

अत्र, प्रणवः सहस्रशीर्षा ऋगेका वामकराय नम इत्यादयो मन्त्रा ऊह्याः ॥

**॥ अथ पीठन्यासः ॥**

स च वक्ष्यमाणपीठपूजयैव व्यक्तीभविष्यतीति प्रयोगसमय एव स्पष्टं वक्ष्यते, इति विचार्यांशाभावान्नेह प्रतन्यते । पुनरिह पूर्वोक्तं तृचस्य ऋष्यादिकं न्यसेत् ।

एवं न्यासविधिं कृत्वा साक्षात्सूर्यो भवेन्नरः ।
न्यासहीनस्य यत्कर्म तद्विलुम्पन्ति राक्षसाः ॥
तस्मात्सर्वप्रयत्नेन सर्वान् न्यासान्समाचरेत् ॥ १ ॥

एतावत्कर्तुमशक्तः स्थूलगणपत्यन्तं विन्यस्य देहाङ्गन्यासमात्रं कुर्यात् । तदभावे देहाङ्गन्यासं त्यजेद्वा । अत्राप्यशक्तः सप्तषडङ्गयां अर्धर्चनामबीजाख्यानि त्रीणि षडङ्गानि कुर्यात् । तदभावेऽर्धर्चषडङ्गमात्रं बीजषडङ्गमात्रं वा । अत्राप्यशक्तो द्वादशाङ्गार्धर्चषडङ्गन्यासद्वयमात्रम् । तत्राप्यशक्तावर्धर्चषडङ्गन्यासमेकमेव कुर्यात् ।

**॥ इति भास्कररायोन्नीते तृचभास्करे विशेषन्यासविधिः ॥**

**॥ अथ पूजाविधिः ॥**

सा ( पूजा ) च पाञ्चरात्रे पञ्चविधा पञ्चविधमुक्तिफलिका उक्ता । अभिगमनमुपादानमिज्या स्वाध्यायो योगश्चेति ।

देवताऽऽयतनं गत्वा तत्संमार्ज्योपलिप्य च ।
निर्माल्यादिकमुद्धार्यं तच्चाभिगमनं मतम् ॥
उपादानं तु गन्धादि यावत्साधनसङ्ग्रहः ।
इज्या तु पीठपूजादिसाङ्गावरणपूजनम् ॥
स्वाध्यायोऽर्थानुसन्धानं स्तोत्रपाठो मनोर्जपः ।
स्वस्य देवतया तस्याः स्वेन वाऽभेदचिन्तनम् ।
योग इत्युच्यते सद्भिरित्थं पूजा तु पञ्चधा ॥

इयमेव चान्तर्यागपदेन व्यपदिश्यते ।

सालोक्यं चैव सामीप्यं सारूप्यं सार्ष्टिरेव च ।
सायुज्यं चेति पञ्चानां मुक्तीनां जनिका इमाः ॥

अत्र, यद्यपि काम्ये कर्मणि पञ्चानामाग्नेयादिवत् संहितानामेव फलजनकत्वं, फलमनभिसन्धाय कुर्वतां तु यद्यशक्तिरतदाऽन्यतमस्यैव कर्तव्यत्वमिति द्रष्टव्यम् ॥

गुरुगणपतिप्रकृतदेवतादीन् नत्वा तृचमष्टाविंशतिवारं जपेत् । यथाशक्ति वा । स्वस्य नाभिसम्मितं **देवतापीठं** सुवर्णादिनिर्मितं संस्थाप्य, पीठस्य स्वस्य च मध्ये पात्राण्यासादयेत् ।

**पात्राणि** तु, वर्धनी, कलशः, सामान्यार्घ्यो, विशेषार्घ्यश्चेति चत्वारि । पिधानान्याधाराण्युपपात्राणि च चत्वारि चत्वारि । सति सम्भवे पाद्यार्घ्याऽऽचमनीयमधुपर्कादिपात्राण्यपि पिधानादियुक्तानि स्थापयेत् । सर्वाणि पार्थक्येन तत्तत्स्थापनकालेऽस्त्रमन्त्रेण प्रक्षालयेत् । तन्त्रेण वा सकृत् ।

तत्र, वर्धनी स्ववामभागे शुद्धजलेन पूरिताऽमन्त्रकमेव स्थाप्या । स्वस्य देवतायाश्च मध्यस्थायां तिर्यग्वीथ्यां वामादिदक्षिणान्तं कलशादीनि । गोमयाम्भसा मण्डलं विरच्य तत्र रक्तचन्दनरक्ताक्षतांश्च, कलशाधारमण्डलाय नमः इति निक्षिप्यास्त्रमन्त्रेणाधारं प्रक्षाल्य मण्डले निक्षिप्य, मं दशकलाव्याप्तवह्निमण्डलाय नमः इति सम्पूज्य स्वाग्रादिप्रादक्षिण्येन, यं "धूम्रार्चिषे नमः" इत्यादिभिर्मन्त्रैर्दशकलाः पूजयेत् ।

धूम्रार्चिरुष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी ।
सुश्रीः सुरूपा कपिला हव्यकव्यवहे उभे ॥

हव्यवहा कव्यवहेत्यर्थः । यरलवादि दशाक्षराणि क्षान्तानि सबिन्दुकान्यादौ ङे नमसी अन्ते, इत्याकारका मन्त्राः ।

तत्र, कलशमस्त्रप्रक्षालितं संस्थाप्य, हृदयमन्त्रेण तत्र गन्धपुष्पाक्षतान्निक्षिप्य, अं द्वादशकलाव्याप्तसूर्यमण्डलाय नम इति पात्रे सूर्यं सम्पूज्य, उक्तक्रमेण तत्कलाः पूजयेत् । ककारादिठकारान्तेष्वेकैकमक्षरं सबिन्दुकं, तदग्रे डकारादिभकारान्तेषु द्वादशवर्णेषु प्रातिलोम्येन एकैकमक्षरं सबिन्दुकं, तत्पश्चात् तपिन्यादिद्वादशनामानि ङेनमोऽन्तानि मन्त्राः । कं भं तपिन्यै नमः । खं बं तापिन्यै नमः, इत्यादि ।

तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ।
सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा ॥

अत्र विश्वायाः सञ्ज्ञात्वेन सर्वनामत्वाभावात् विश्वायै नम इत्येव प्रयोगः ।

ततो मातृकावर्णान् प्रतिलोममुच्चार्य, अन्ते शिरोमन्त्रमुक्त्वा, 'इमं मे गङ्गे' इति जलेन सम्पूर्य, उं षोडशकलाव्याप्तसोममण्डलाय नमः, इति सोमं सम्पूज्य, तत्कला अर्चयेत् । अकारादिषोडशस्वरेष्वेकैकं सबिन्दुकं, अमृतादिनामानि, ङेनमोऽन्ता मन्त्राः ।

अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ।
शशिनी चन्द्रिकाकान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ।
पूर्णा पूर्णामृता चेति कलाश्चन्द्रस्य षोडश ॥

अङ्कुशबीजेनाङ्कुशमुद्रया रविमण्डलात्तीर्थान्याकृष्य । ब्रह्माण्डोदरतीर्थानि० । सर्वे समुद्राः सरितः० । गङ्गे च यमुने चैव० । इति मन्त्रैर्जले संयोज्याभ्यर्च्य, चक्रमुद्रयाऽस्त्रमन्त्रेण संरक्ष्य,

धेनुः शङ्खस्तथा पद्मं गदा गरुडमेव च ।
ग्रथितं यमपाशश्च अङ्कुशश्चाष्टमुद्रिकाः ॥

प्रदर्श्य, तत्त्वा यामीति वरुणमावाह्याभ्यर्च्य, आकलशेष्वित्यभिमन्त्र्य, मही द्यौरिति सप्तमृत्तिकाः, ओषधय इति सर्वौषधानि, रुवति भीम इति पञ्च त्वचः, प्रवो यज्ञेष्विति पञ्च पल्लवान्, गन्धद्वारामिति गन्धान्, या ओषधीरिति यवान्, काण्डात्काण्डादिति दूर्वा, याः फलिनीर्या० इति फलानि, स हि रत्नानीति पञ्चरत्नानि, हिरण्यरूप इति किञ्चिद्द्रव्यं च जले निक्षिप्य । सौरगायत्र्या दशवारमभिमन्त्र्य, कलशस्य मुखे विष्णुः इति सार्धश्लोकत्रयं, देवदानवसंवादे इत्यादिसार्धश्लोकचतुष्कं च कलशोपरि हस्तं ददानः पठेत् ।

जलपूरणे गायत्रीमात्रं केचिदिच्छन्ति ।

ततो हृदयकमलाद्देवं तृचमन्त्रेण कलशस्थजले समावाह्य, आवाहनादिचतुर्दशमुद्राः प्रदर्श्य, पञ्चोपचारैः प्रत्यक्षैरभ्यर्च्य, शिखामन्त्रेण गालिनीमुद्रां प्रदर्श्य, नेत्रमन्त्रेण, मूलेन वा वीक्ष्य, कवचमन्त्रेणावगुण्ठनमुद्रयाऽवगुण्ठ्य, मूलेन व्यापकमुद्रया सकलीकृत्य, मूलस्याङ्ग-

मन्त्रैर्जलेऽङ्गन्यासं कृत्वा, अस्त्रमन्त्रेण दश दिशो बद्ध्वा, जलं स्पृशन् अष्टवारं मूलं जप्त्वा, उपपात्रेण तज्जलं किञ्चिद्वर्धन्यां निक्षिप्य, कलशं पिधाय, पिधाने उपपात्रं निक्षिप्य, नमेत् ।

अत्राष्टत्रिंशत्कलापूजा कृताऽकृता । सप्तमृत्तिकादिषु, गजाश्वस्थानरथ्यावल्मीकसङ्गम-ह्रदगोष्ठस्था मृद् । रत्नेषु, कनककुलिशनीलपद्मरागमौक्तिकाख्यानि ।

उदुम्बरकुशदूर्वारक्तोत्पलचम्पकबिल्वविष्णुक्रान्तातुलसीबर्हिषीशङ्खपुष्पीशतावर्यश्वगन्धा-निर्गुण्डीरक्तपीतसर्षपाऽपामार्गपनसपलाशजीवकप्रियङ्गुगोधूमव्रीह्यश्वत्थदधिदुग्धघृतपद्मपत्रनीलो-त्पलसितपीतरक्तकुरण्टकगुञ्जावचाभद्रमुस्ताऽऽख्यद्वात्रिंशदौषधेषु च, वटाश्वत्थाऽऽम्रप्लक्षजम्बूनां त्वक्षु पल्लवेषु च, यथालाभं निक्षिपेत् । अलाभे तत्तद्बुद्ध्याऽक्षतान् निक्षिप्य मन्त्रान् पठेत् ।

**मन्त्रा यज्ञार्थसाधकाः** । इति वचनात् ।

अत्र हृदयादिमन्त्रशब्देन यस्य मूलस्य हृदयादिषडङ्गन्यासदशायां यावान् मन्त्रो जातियुक्तो यस्मिन् स्थाने न्यस्यते स तच्छब्देन व्यपदिश्यते । प्रकृते च अर्धर्चषडङ्गमन्त्रा ग्राह्याः । हृदयाय नम इत्यादि जातिमात्रमेवेति **केचित्** । नम इत्येवे**त्यन्ये** ।

## ॥ इति सामान्यार्घ्यः ॥

तद्दक्षिणे भागे अन्यूनानतिरिक्तं कलशवदेव विशेषार्घ्यः । पूरणं तु कलशोदकेनैव । आवरणदेवतापूजा प्रधानदेवतापूजाऽऽवरणपूजासमर्पणादिषु च सामान्यार्घ्यस्यैव विनियोगः । विशेषार्घ्यजलस्य तु विनियोगो वक्ष्यते । तत्पात्रेण तु कलशोदकेन वक्ष्यमाणं प्रधानार्घ्यं दद्यात् । तत्प्रमाणं तु—

प्रस्थोदग्राह्यर्घ्यपात्रं विस्तारे द्वादशाङ्गुलम् ।
षडङ्गुलोन्नतं कार्यं दैर्घ्यतः षोडशाङ्गुलम् ॥

अत्र प्रस्थो मागधपरिभाषया ग्राह्यो न तु कलिङ्गपरिभाषया ।

"प्राङ्मुखः सन्नर्घ्यपात्रं मागधप्रस्थपूरितम्" इति **लैङ्गेनो**पसंहारात् । मध्येऽष्टदलं कमलयुक्तं च कार्यम् । **ये** च विशेषार्घ्यं नेच्छन्ति **तन्मते** कलशोदकं तज्जलस्थानापन्नं मन्तव्यम् । तत्पात्रस्थानेषु सामान्यार्घ्यपात्रमेवेति । पाद्यादिपात्रेषु तु आधारपात्रजलपूरणानि सर्वाणि मूलेन सौरगायत्र्या वा पार्थक्येन तन्त्रेण वा, अष्टवारं मूलेनाभिमन्त्रणं, न पुनरितोऽधि-काङ्गकलापस्तत्र कार्यः । एतानि पात्राणि यथावकाशं स्थापयेत् । मागधप्रस्थस्वरूपं त्वग्रे वक्ष्यामः ।

ततो विशेषार्घ्यजलं, कलशजलं वा, उपपात्रेणादाय, आत्मानं सम्प्रोक्ष्यावशिष्टेन त्रिवारं मूलमुच्चरन् गन्धकुसुमादिपाद्यार्घ्यान् प्रोक्षेत् । अत्र कलशजलस्य प्रसन्नार्घ्यजलस्य वा व्यये, ईषन्नाशे वा, वर्धनीस्थजलैर्मध्ये मध्ये पूरणम् । निरवशेषनाशव्यययोस्तु पुनः प्रतिष्ठापनं सौरगायत्र्या जपश्च, यथाशक्ति ।

विशेषार्घ्यजलस्य तु व्यये सावशेषनाशे च कलशोदकेनैव पुनः पुनः पूरणम् । निरवशेषनाशव्यययोस्तु कलशजलेनैव पूरयित्वा तृचेन द्वादशवारमभिमन्त्र्य सौरगायत्रीमष्टोत्तरशतं जपेदिति विवेकः ।

पीठन्यासान्ते भूतशुद्ध्यादिकलाप इहैव स्थाने कार्य इति **केचित्** । तत्पक्षे पूजाद्रव्यप्रोक्षणोत्तरं आत्मप्रोक्षणं ततो भूतशुद्ध्यादिरिति क्रमः ।

पूजाद्रव्याणि सम्प्रोक्ष्य आत्मानं प्रोक्षयेत्ततः ।
भूतशुद्ध्यादिकं कृत्वा ततो न्यासं समारभेत् ॥

इति **भविष्यात्** ।

## ॥ अथान्तर्यागः ॥

उदात्तस्वरज्ञानक्षेत्रस्वरूपश्रीसूर्यचरणकमलभक्तिसिद्ध्यर्थं परमात्मस्वरूपश्रीसूर्यनारायणप्रीत्यर्थं अन्तर्यागमहं करिष्ये ।

ब्रह्मकन्दसमुद्भूतं ज्ञाननालेन शोभितम् ।
ऐश्वर्याष्टदलोपेतं परवैराग्यकर्णिकम् ॥

पद्मं हृदि विचिन्त्य, "हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् । सहस्रपुरुषादित्य" इति मन्त्रमुच्चार्य, योऽसावादित्ये पुरुषः सोऽसावहमहं सूर्य आत्मा जगतस्तस्थुषश्च विश्वरूपाय परमात्मने नमः इति वदन् एतदर्थमनुसन्दधीत । अत्र स्वोद्देश्यको देवताविधेयको, देवतोद्देश्यकः स्वविधेयकश्चेत्यभेदबोधो द्विविधः ।

" द्विविधोऽपि ह्यावश्यक " इति **शारीरकमीमांसायां तृतीयेऽध्याये** व्यक्तम् । अद्वैतभावनाप्रकारस्तु श्रीगुरुसेवैकलभ्यत्वेनातिरहस्यत्वान्नेह लिख्यते ।

## ॥ इत्यन्तर्यागः ॥

## ॥ अथाऽऽत्मपूजा ॥

तद्विस्तरस्तु गुरुमुखादवगन्तव्यः । **प्रपञ्चसारसङ्ग्रहे गीर्वाणेन्द्रैः** प्रपञ्चितोऽस्मिन् युगे तदधिकारिणोऽपि दुर्मिला इति नेह प्रतन्यते । अथेद्गात्मपूजनमजानानोऽपि मनःस्थैर्याभावादशक्तश्चेदित्थं कुर्यात् ।

गन्धद्वारामानन्दः श्रीरनुष्टुप् आत्मार्चने विनियोग इति यथास्थानं न्यस्य, तथैवार्चास्थलादिषु गन्धाक्षतांश्च विन्यस्य, "माल्यादीनि सुगन्धीनि०" इति मन्त्रेण पुष्पाणि स्वमूर्धनि निक्षिप्य, "नमोऽस्त्वनन्ताय" इति श्लोकान्ते, सूर्यात्मने मह्यं नम इति ह्यात्मानं प्रणमेदिति।

इमे चान्तर्यागात्मपूजे पीठदेवतापूजोत्तरं **केचिदिच्छन्ति। परे** त्वनयोर्मण्डलपूजानन्तर्यं मेनिरे। वक्ष्यमाणध्यानानन्तर्यं **त्वन्ये** मन्यन्ते।

**॥ इति आत्मपूजा ॥**

ततो जलसामीप्यपक्षे जल एव वक्ष्यमाण**यन्त्रचिन्तनम्**। स्थले चेत् स्वपुरःस्थापिते सौवर्णादिपीठे स्वास्तरणोपेते महापात्रे वा यन्त्रं चिन्तयेत्। तदभावे प्रतिमायां सूर्यकान्तमणौ शालग्रामे बाणलिङ्गे दर्पणादिके वा चिन्तयेत्।

तत्र **यन्त्रं** सौवर्णादिफलके निर्मितं यन्त्रसामान्यविधिसिद्धं मुख्यम्। स च सामान्यविधिरस्माभिर्ग्रन्थान्ते विस्तरेण वक्ष्यते।

तदभावे ताम्रपात्रे रक्तचन्दनक्षोदेन सम्यग् निर्मितम्।

तच्च यन्त्रं नानाविधं तन्त्रभेदेन दृश्यते।<br>
तृचकल्पे लिखेच्चक्रं कृष्णेन परिभाषितम्।<br>
त्रिकोणं पूर्वमुद्धृत्य तद्बाह्ये चतुरस्रकम्॥<br>
तद्बाह्ये चाथ षट्कोणं ततश्चाष्टदलं लिखेत्।<br>
तत ऊर्ध्वं समालेख्यं दलद्वादशकं शुभम्।<br>
भूगृहं तु ततो लेख्यं चतुर्द्वारोपशोभितम्॥

अत्र भूपुरमेकरेखमेव। विशेषाश्रवणात्। इत्येकः पक्षः।

वृत्तमष्टदलं पद्मं षट्कोणं वृत्तयुग्मकम्।<br>
वसुकोणमथो वृत्तं द्वादशारमथाम्बुजम्।<br>
पुरत्रयं चतुर्द्वारमेवं यन्त्रं तृचे शुभम्॥ इति द्वितीयः पक्षः।

वृत्तं त्रिकोणं वृत्तं च षट्कोणं वृत्तयुग्मकम्।<br>
वृत्ताष्टदलपद्मञ्च बीजाक्षरसमन्वितम्॥<br>
वृत्तद्वयमथो पद्मं दलैर्द्वादशभिर्युतम्।<br>
तद्बाह्ये वृत्तयुग्मं च चतुर्द्वारं च भूपुरम्।<br>
एवं यन्त्रं तृचे कार्यं सूर्यप्रीतिकरं परम्॥

अत्र वृत्ताष्टदलपद्मञ्चेत्यत्र पद्मं कर्णिकारूपमेव। वृत्तं छन्दःपूरणायोक्तम्, द्वितीयवृत्तस्य कर्णिकात्वनिरासार्थं वा। न पुनः पार्थक्येनेति भ्रमितव्यम्। तथा सति वृत्तत्रितयस्यैव

वक्तव्यतापत्तिरुत्तरपदेन समासानुपपत्तिश्च । तद्विनैव वा दशावरणपूर्तेश्च । अत एव यत्र वृत्तपदं समासेन निर्दिश्य तदुत्तरं पद्मं निर्दिश्यते तत्रोक्तवृत्तातिरिक्तं वृत्तं कर्णिकारूपमावश्यकमिति मन्तव्यम् । इति तृतीयः पक्षः ।

आदौ सकर्णिकमष्टदलं ततो द्वादशदलं, इति चतुर्थः पक्षः ।

सकर्णिकं द्वादशदलमात्रमेवेति पञ्चमः पक्षः ।

अनयोः पक्षयोर्भूपुरं कृतमकृतं वा । इमावेव च पक्षौ शिष्टगृहीतौ दृश्येते ।

सकर्णिकं सकेसरमष्टदलमात्रमेवेति षष्ठः पक्षः ।

बिन्दुत्रिकोणं वृत्तं च पद्माष्टकमकेसरम् ।
चतुरस्रं चतुर्द्वारं विलिखेत्सुमनोहरम् ॥
तद्बहिस्त्रिवृत्तं कुर्यात्ताम्रपात्रे विशेषतः ।
तत्र सम्पूजयेत्सूर्यमनेन विधिना सुधीः ॥

पद्माष्टकसकेसरं इति **क्वचित्पाठः** । अत्र चतुरस्राद्बहिर्वर्तुलरेखात्रयं कार्यं, चतुरस्रं त्वेकरेखमेवेति वर्णनं तु भ्रम एव । भूपुरात्परतो यन्त्रवृद्धेः क्वाप्यदर्शनात् । बिन्दुना सहैव द्वादशसङ्ख्यापूर्तेश्च । श्रीचक्रादौ बिन्दोरप्यावरणेषु गणनदर्शनात् । ततश्च पद्माष्टकाद्बहिस्तच्चतुरस्रं त्रिवृत्तं त्रिरेखं कार्यमिति तदर्थ इति सप्तमः पक्षः ।

**केचित्तु** यदावरणं यावत्सङ्ख्यदैवत्यं तावद्दलात्मकं चक्रं तत्र विरच्य द्वादशसप्तत्रिचतुर्दशादिचक्रोपेतं नानाविधं यन्त्रं रचयन्ति, तत्तु तर्कितमात्रं न प्रमाणसिद्धम् । सोऽपि पक्षो वक्ष्यमाणैरावरणैरेवासिद्ध इति नेहोट्टङ्कितः ।

एषामन्यतमं यथासम्प्रदायमेकं यन्त्रं पुरतो निक्षिप्य सामान्यार्घ्यजलेन प्रोक्षेन्मूलेन ।

॥ इति यन्त्रविधिः ॥

इह **केचित्** सूर्यस्य ध्यानं कार्यमिति वदन्ति । पीठपूजोत्तरं पुनरपि तदिच्छन्ति । तत्रैवेति तु युक्तम् । प्रतिमादिपक्षे मलापकर्षणं स्नानं मौसलं करणीयम् ।

ततः प्राग्द्वारे द्वारश्रियं क्षेत्रपालं भुवनेश्वरीं च पूजयेत् । प्रणव आद्याक्षरं सबिन्दुकं ङेनमोऽन्तं नाम चेति मन्त्राः । भुवनेश्वर्यास्तु लज्जाबीजं नमः शब्दश्चेति त्र्यक्षरो मन्त्रः । **शिष्टास्तु** ॐ द्वां द्वारश्रियै नमः द्वारश्रियमावाहयामि स्थापयामि पूजयामि नमः इति मन्त्रान् सर्वत्र पठन्ति । एवमेवावशिष्टं दक्षिणादिद्वारत्रयं त्रित्रिदैवत्यं पूज्यम् । परं तु क्षेत्रपालस्थाने गणेशदुर्गामहालक्ष्म्य इति विशेषः ।

॥ इति द्वारपूजा ॥

ततोऽष्टदलपद्मे देवतान्यासः कार्यः । "पूज्यपूजकयोर्मध्यं **प्राची** स्याद्यन्त्रपूजने" ।

इन्द्रादीनां तु यथास्थितत्वैवेति **मन्त्रमहोदधिः । नेति गीर्वाणेन्द्राः ।** इति दिक्परिभाषया पूर्वादिप्रादक्षिण्येन दलाग्रेषु—

दण्डः पूषा पिङ्गलश्च प्रचण्डः क्षेत्रपालकः ।
ततो गणपतिर्दुर्गा लक्ष्मीर्न्यस्याद्दलाग्रके ॥

मन्त्रकल्पना सर्वत्र पूर्ववत् । दलाग्रदेवताभ्यो नम इति समष्टिपूजां च कुर्यात् ।

दलमध्ये—

सूर्यो रविर्विवस्वान् खगोऽरुणो मित्र आदित्यो विष्णुर्भास्कर इति तु न्यस्य दलमध्ये । मध्ये इति कर्णिकायां नवमं भास्करं न्यसेदित्यर्थः । अत्राष्टमस्थाने अंशुमन्तं **केचिद्वर्णयन्ति ।** दलमध्ये दलमध्यदेवताभ्यो नमः इति समष्टिपूजा ।

दलमूले—

आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् ।
मार्तण्डश्च जगच्चक्षुर्दलमूलेषु संस्थिताः ॥

**केचित्** तु मध्यमूलयोर्मध्ये दीप्त्यादिशक्त्यष्टकं न्यस्यन्ति—

दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा ।
अमोघा वैद्युता चैव नवमी सर्वतोमुखी ॥

## ॥ इति यन्त्रन्यासः ॥

**पीठस्य** दक्षिणवामयोर्गुरुगणपती, मध्ये आधारशक्तिर्मूलप्रकृतिरादिकूर्मो वराहोऽनन्तः पृथिवी स्वर्णमण्डपः स्वर्णवेदिका रत्नसिंहासनं श्वेतच्छत्रं चेति दशकमेकैकोपरि, सितचामरे तु सिंहासनपार्श्वयोः, धर्मज्ञानवैराग्यैश्वर्याणि सिंहासनस्य पादेषु, नञ्पूर्वाण्येतान्येव गात्रेषु, अभितः ऋग्वेदादिचतुष्टयं कृतयुगादिचतुष्टयं, मन्दरादिदेवतरुपञ्चकं पीठपद्मस्य मूलं कन्दो नालं पद्मं पत्राणि केसराः कर्णिका अर्कसोमवह्निमण्डलानि ब्रह्मविष्णुरुद्राः सत्त्वरजस्तमांसि मायाविद्ये, आत्माऽन्तरात्मपरमात्मज्ञानात्मानः भूरादि व्याहृतिपुरुषाश्चत्वारः ।

प्रागादिदलेषु मध्ये च दीप्ताद्या नव शक्तयः, मध्ये 'विनतातनयो देव' इति मन्त्रमुच्चार्य सप्ततुरगमरुणसारथिमावाहयामीत्यरुणमावाह्य, कर्णिकायामेवाष्टदिक्षु मध्ये चारुणप्रभूतविभूत-विमलकमलयोगाधारमध्यश्रीपरमसुखाख्यानि नवासनानि च पूज्यानि । पीठदेवतासु गुर्वादिषु गुं गुरुभ्यो नमः इत्यादयो मन्त्रा ऊह्याः ।

सोममण्डले पञ्चमस्वरः सबिन्दुको वह्निमण्डले मकारः सबिन्दुको ज्ञानात्मनि ह्ल्लेखा नवशक्तिषु तु रां रीं रूं रें रैं रों रौं रं रः इति बीजानि प्राग्योज्यानि, इति शेषः ।

गुरुं गणपतिं च **केचिन्ने**च्छन्ति । अनन्तोत्तरं शेषाय नम इत्य**न्ये** । तत् प्रायोऽनन्तपदस्यैव वियदादिभ्रमनिरासाय व्याख्यानं प्रमादो वा । पृथ्व्यनन्तरं क्षीरसमुद्रश्वेतद्वीपादिकं तु सौरेतरविषयत्वान्नेहोल्लिखितम् । श्वेतच्छत्रसितचामराणि च **परे** नेच्छन्ति । **परे** तावत् धर्मादिचतुष्कं कन्दनालकर्णिकाकेसरेषु धर्मकन्दाय नम इत्यादिरीत्या योजयन्ति । **तन्मते** पद्मादिकर्णिकान्तानां क्रमे वैपरीत्यं द्रष्टव्यम् । नञ्पूर्वाणि अधर्मादीनि चत्वारि इत्यर्थः । गात्रपदेन फलकान्युच्यन्ते । आग्नेयादिकोणेषु पादपूजा । प्रागादिषु फलकपूजा ऋग्यजुःसामाथर्वणवेदेभ्यो नम इति **केचित्** । ऋग्वेदादीनां पार्थक्यमिति **केचित्** । एवमेव कृतत्रेतादियुगेष्वपि मतद्वयी ।

मन्दारः पारिजातः सन्तानः कल्पवृक्षो हरिचन्दनमिति पृथगेव पूज्याः । पत्रेभ्य इत्यस्यानन्तरं दलेभ्यो नम इति **केचित्** । तद्वा भ्रमनिरासाय शेषोऽनन्त इतिवत् व्याख्यारूपम् ।

सूर्यमण्डलाय नमः सूर्यमण्डलाधिपतये ब्रह्मणे नमः इत्यादिक्रमेण मण्डलत्रयाधिपतित्वेनैव ब्रह्मविष्णुरुद्रान् सङ्कलयन्त्य**न्ये** । तदग्रे च शक्तिमण्डलं शक्तिमण्डलाधिपतिं वृषभध्वजं चार्चयन्ति **केचित्** । सत्त्वादिविद्यान्तपञ्चकं सूर्यमण्डलात्प्रागेव**न्ये** वर्णयन्ति । ज्ञानात्मानं च **बहवो नैवे**च्छन्ति । व्याहृतिपुरुषा, भूःपुरुषो भुवःपुरुष इत्याद्याश्चत्वारः, व्यष्टिसमष्टिभेदात् । दीप्ताद्याः **यन्त्रन्यासे** मतान्तरत्वेन अनुपदमेव वर्णिताः । अरुणासनायेत्यादिरीत्या नवासनेष्वप्यासनपदयोगः । **क्वचित्** तु योगासनं द्वितीयं, आधारासनमष्टममिति **मतविशेषः** ।

इयत्यां पीठपूजायामशक्तस्तु, यन्त्रस्योत्तरतो दशदेवताः पूजयेत्—आधारः कूर्मः शेषो वराहः पृथ्वी कन्दो नालः पद्मं पत्राणि कर्णिका केसरा इति ।

॥ इति पीठपूजा ॥

अथ ध्यायेत्—

पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः ।
सप्ताश्वरथसंयुक्तो ध्यातव्यो द्विभुजो रविः ॥

यद्वा

अरुणाग्रेसरं हेमद्युतिकुण्डलभूषितम् ।
तेजोराशिं श्रिया युक्तं तप्तकाञ्चनसन्निभम् ॥

किरीटिनं पद्मनेत्रं पद्मरागविभूषितम् ।
सिन्दूरारुणमीशानं वामार्धदयितं रविम् ॥

पाशाङ्कुशधरं देवं साक्षसूत्रकमण्डलुम् ।
प्रसन्नवदनं शान्तं चिन्तयेत्कमलासनम् ॥

अथवा

अष्टबाहुं द्विषट्काक्षं पद्मस्थं रविमण्डले ।
हृत्पद्मस्थमुदाराङ्गं स्मरेच्चन्द्रग्रहैर्युतम् ॥
वेदवेदाङ्गशारीरो दिव्यदीप्तिकरः परः ।
रक्षोघ्नो रक्तवर्णश्च रक्तसंहारिताकृतिः ॥
एकचक्ररथो यस्य दिव्यः कनकभूषणः ।
स मे भवतु सुप्रीतः पद्महस्तो दिवाकरः ॥

अथवा

उदयगिरिमुपेतं भास्करं पद्महस्तम्
निखिलभुवननेत्रं रक्तरत्नोपमेयम् ।
तिमिरकरिमृगेन्द्रं मोदकं पद्मिनीनाम्
सुखकरमभिवन्दे सुन्दरं विश्वरूपम् ॥

यद्वा

सशङ्खचक्रं रविमण्डले स्थितम्
कुशेशयाक्रान्तमनन्तमच्युतम् ।
भजामि बुद्ध्या तपनीयमूर्तिम्
सुरोत्तमं चित्रविभूषणोज्ज्वलम् ॥

अथवा

ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

यद्वा

नमः सवित्रे जगदेकचक्षुषे
जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे
विरिञ्चिनारायणशङ्करात्मने ॥

**केचित्** तु, ध्यानात्पूर्वमेवावरणदेवताः पूज्या इत्युक्त्वाऽऽवरणानि लिखन्ति । तत्र पूज्या इति पदस्य ध्यातव्या इत्यर्थः । प्रधानपूजोत्तरमावरणपूजेति सर्वतन्त्रसिद्धान्तात् । अत एव ध्यानाव्यवहितोत्तरमावरणपूजोक्तिरपि ध्यानाभिप्रायेणैव नेया । ये तु, आवाहनोत्तरं

देवस्याङ्गन्यासस्ततो ध्यानं ततः षण्मुद्राप्रदर्शनं च लिखन्ति तेषां भ्रम एव। अत्र ध्याने विरोधिनां रूपाणां विकल्पः। अविरोधे तु नानाशाखाऽऽम्नातायां ब्रह्मविद्यायामिव गुणोपसंहारः। उपसंहृतगुणं तु रविध्यानं प्रयोगसमये वक्ष्यामः।

॥ इति ध्यानम् ॥

एवं मूर्तिं हृदि पीठे च ध्यानेन प्रकल्प्य त्रिवारं प्रणवपूर्वकं सौराष्टाक्षरं विश्वतश्चक्षुरित्यृचं वा,

"एहि सूर्य सहस्रांशो तेजोराशे जगत्पते।
अनुकम्पय मां भक्त्या प्रसीद परमेश्वर॥"

इति वा 'आकृष्णेन'इति मन्त्रमुच्चार्य पुनः सकृत्प्रणवं मूलं चोक्त्वा, "ॐ भगवन् आगच्छागच्छ ॐ आवाहयामि" इत्युच्चार्य जलगन्धपुष्पाक्षतान् हस्ताञ्जलौ गृहीत्वा स्वहृत्कमले कल्पितां मूर्तिं तेजोमयीं कृत्वा सुषुम्णान्तर्मार्गेण प्राणवायुना सह भ्रूमध्यं नीत्वा क्षणं विश्राम्य, ततस्तत्तेजो ब्रह्मरन्ध्रं नीत्वा सुषुम्णाबहिर्मार्गेण पुनर्भ्रूमध्यं हृदयं वाऽवरोप्य प्राणवायुना वहन्नाड्या पुष्पाञ्जलौ समानीय पुरःस्थितमूर्तेर्ब्रह्मरन्ध्रे पुष्पाञ्जलिना सह तत्तेजः प्रक्षिप्य तेन द्वाराऽन्तःप्रविश्य सर्वावयवभावेन परिणतं विभावयेत्।

ततः किञ्चिदासनं देवतायै प्रकल्पयेत्। इदं चोपचारान्तर्गताद्वक्ष्यमाणासनाद्भिन्नम्। आवाहनसन्दंशेनैतदङ्गत्वात्।

यद्यपि तावत् एहि सूर्य इतिमन्त्रस्तन्त्रभेदेन चतुर्थचरणे विलक्षणः पठ्यते, क्वचित् गृहाणार्घ्यं नमोऽस्तु ते इति, क्वचिच्च प्रसीद परमेश्वर इति, तथाऽपि यथालिङ्गं विभज्य विनियोगः। ये तु आवाहनेऽर्घ्ये च विकल्पेनान्यतरं मन्त्रं लिखन्ति ते लिङ्गविरोधादुपेक्ष्याः। न चैन्द्र्यादिवदाहत्य विनियोगवशाल्लिङ्गबाधः।

"एहि सूर्येति मन्त्रेण कुर्यादावाहनं बुधः।"

इति विधौ मन्त्रप्रतीकस्यैव ग्रहणेन अर्घ्येतरलिङ्गकस्यापि ग्रहणसम्भवेन अर्घ्यलिङ्गकचरणस्याश्विनोर्बाहुभ्यामित्यादिवदसमवेतार्थप्रकाशकत्वेन दृष्टार्थतामात्रकल्पनस्यायुक्तत्वात्।

ततो भूः पुरुषमावाहयामीति मन्त्रचतुष्टयं व्याहृतिलिङ्गकं पठेत्। अधिदैवतप्रत्यधिदैवतयोरग्निरुद्रयोरप्यावाहनं दक्षवामपार्श्वयोरन्ये मन्यन्ते। तत्पक्षे अग्निं दूतमित्यग्नेर्मन्त्रः, त्र्यम्बकमिति वा, कद्रुद्रायेति वा रुद्रस्य।

तत आवाहनं स्थापनं सन्निधापनं संरोधनं सम्मुखीकरणं प्रार्थनमवगुण्ठनं सकलीकरणममृतीकरणं परमीकरणं च तत्तन्मुद्रामन्त्रवासनासहितं कार्यम्। मुद्राप्रकारस्तु वक्ष्यते।

**सकलीकरणं** नाम देवस्याङ्गे षडङ्गन्यासः। तेन तत्र षडङ्गमुद्रा एव नान्याः। तथा चैताः पञ्चदशमुद्रा भवन्ति। **अन्ये** तु प्रार्थनपरमीकरणयोरन्यतरत् परित्यज्य चतुर्दशैव द्वेधेच्छन्ति। प्रार्थनान्ताः षण्मुद्रा एवेति तु **परे** मेनिरे।

मन्त्रास्तु, प्रणवोत्तरमावाहितो भव स्थापितो भवेत्यादि परमीकृतो भवेत्यन्ता ऊह्याः। सकलीकरणे त्वर्धर्चषडङ्गमन्त्रैरेव षडङ्गानि विन्यस्य सकलीकृतो भवेति वदेत्।

वासनास्तु **तन्त्रराजटीकायां मनोरमायामुक्ताः**। **आवाहनं** नाम सर्वतः प्रसृमरस्य त्रिविधपरिच्छेदरहितस्य ब्राह्मतेजसः परिच्छिद्यावेक्षणपूर्वकं हृदायतनात्पुरोभागे निःसार्य परिच्छेदगोचरस्वदृष्टिविषयत्वप्रार्थनम्। तत्र देशतः कालतो वस्तुतश्चेति त्रिविधः परिच्छेदो, यथा देवदत्तस्य काशीस्थस्य पाटलिपुत्रे विरहः। अयं चात्यन्ताभाव एव। जीवनकालात्प्राक्पश्चादभावौ तु प्रागभावध्वंसौ। तथैव यज्ञदत्तात्परिच्छेदस्त्वन्योन्याभाव एव। इत्यभावाप्रतियोगित्वमेव ह्यपरिच्छिन्नत्वम्।

**संस्थापनं** पूजापीठेऽवस्थितिप्रार्थनम्। **सन्निधापनं** नैकट्यप्रार्थनम्। **सन्निरोधनं** अनन्यचित्तत्वप्रार्थनम्। **सम्मुखीकरणं** आभिमुख्येनोपचाराङ्गीकरणप्रार्थनम्। **अवगुण्ठनं** अयोग्यदृष्ट्यविषयत्वापादनम्। **सकलीकरणं** सर्वावयवपरिपूर्णतयाऽवस्थितिप्रार्थनम्। **अमृतीकरण**मानन्दपरिपूर्णत्वेनाक्षुभितचित्ततयाऽवस्थानप्रार्थनम्। **परमीकरणं** सर्वापराधसहिष्णुत्वेन परमकृपावत्तयाऽवस्थितिप्रार्थनम्।

एषां च सर्वेषां प्रार्थनरूपत्वादेव न प्रार्थनं पार्थक्येन गणितं **मनोरमायाम्**। प्रार्थनेन सह चतुर्दशमुद्रापक्षे परमीकरणवासनैव तत्र कार्या। षण्मुद्रापक्षेऽवगुण्ठनादिवासनानामन्यतमां सर्वाम् एव वा कुर्यात्। पञ्चदशमुद्रापक्षे, स्वेन पूर्वप्रार्थितैर्विषयैर्देवतायाश्चित्ते फल्गुरयममर्यादां करोतीति भानं मा भूदिति प्रार्थनपुरःसरं पूर्वप्रार्थनानामेव दृढीकारः। अत एवैतत्पक्षे इयं मुद्रा सर्वान्ते प्रदर्शनीया। न षष्ठस्थाने।

ईदृशं चावाहनमन्यूनानतिरिक्तं सर्वपूजास्वावश्यकमिति परमावधानेन कार्यम्। अत्र मात्रामात्रमपि न्यूनं चेत् देवताऽऽविर्भावस्यैवाभावेन सर्वपूजाया एव वैफल्यं स्यात्।

यत्र त्वावाहनं निषिद्धं, यथा— **मन्त्रदेवताप्रकाशिकायामुक्तम्**—

" स्थण्डिले नित्यमेव स्यात्प्रतिमायां कृताकृतम्।
चलायामचलायां तु शालग्रामशिलासु वा।
न कर्तव्यमिहावाहप्रमुखं पूर्वमेव तत् " ॥ इति।

अस्यार्थः। एवमिति पूर्वोक्तावाहनप्रकारपरामर्शः। चलायामिति कृताकृतान्वयि। शिलास्विति बहुवचनं बाणलिङ्गहिङ्गुलाजादिग्रहणाय। अत एव शालग्रामशब्दः छत्रिन्यायेन तादृशसकलशिलासु लाक्षणिकः। आवाहः हृदयकमलादूर्ध्वानयनम्। प्रमुखपदेन बहिरानयनान्तः

क्रियाजालपरिग्रहः । पूर्वमेव तदिति मूर्तिप्रतिष्ठादिसमये । बाणासुरादिभिरेव महाप्रभावैः कृतस्य तस्यातिसृष्टत्वेन सद्धसाधनादिदोषापत्तेरित्यर्थः । तत्रापि हृदयाद्बहिरानयनभावनैव निषिध्यते, नान्येति । येषां तु हृदि मूर्तिप्रकल्पनादिपरमीकरणान्तवासनानामेव आवाहनपदवाच्यत्वेन तस्यैव निषेध इति मतं, तेषां प्रमुखपदस्वारस्यभङ्गः । यद्यपि हृदि मूर्तिप्रकल्पनस्योर्ध्वानयनमात्रमङ्गीकृत्य आवाहनपदवाच्यप्रमुखपदेन परमीकरणान्तक्रियाग्रहणात्सर्वनिषेध इति सुवचं, तथाऽपि सम्प्रदायमनुरुध्यैवमुक्तम् । अयमपि निषेधः शालग्रामशिलासु विष्णोरेव पूजायाम् । देवतान्तरस्य तत्र पूजायामावाहनमावश्यकम् । एवं बाणे शिवस्य, हिंगुलापीठोद्भवपाषाणे देव्या एव । एवं मातृपुरस्थपाषाणेऽपि शोणनदनर्मदापाषाणयोर्विनायकस्यैवेत्यादि बोध्यमिति परमरहस्यम् ।

॥ **इत्यावाहनम्** ॥

**अथोपचाराः** । तेभ्यः पूर्वमावाहनात्परं स्वस्मिन्मातृकान्यासं पुनः **केचिदि**च्छन्ति । पुरुषसूक्तन्यासस्तु पूर्वोक्तो देवतादेहे स्वदेहे वाऽत्रैव कार्य इत्यपि **केचित्** ।

उपचाराश्च, अष्टोत्तरशतं चतुःषष्टिरष्टादश षोडश दश पञ्च चेति षड्विधाः । तत्र चतुःषष्टिरष्टोत्तरशतञ्च प्रायेण देवीविषय एवोपलभ्यन्ते । षोडशसङ्ख्यास्तु तन्त्रभेदेन सङ्ख्येयभेदान्नानाविधा दृश्यन्ते । तथा हि–

आसनस्वागते सार्घ्यपाद्ये साचमनीयके ।
मधुपर्काचमस्नानवसनाभरणानि च ।
सुगन्धसुमनोधूपदीपनैवेद्यवन्दनाः ॥

इति तु **गीर्वाणेन्द्राः** । **तन्त्रराजे** तु–

" पाद्यार्घ्याचमनस्नानवसनाभरणानि च ।
गन्धः पुष्पं धूपदीपौ नैवेद्याचमनं ततः ।
ताम्बूलमर्चनास्तोत्रं तर्पणञ्च नमस्क्रिया "इति ॥

अत्र नैवेद्याचमनमेकं न पृथगिति व्याख्यातं **मनोरमायाम्** । **केचित्** तु, आवाहनासनपाद्यार्घ्याचमनस्नानवस्त्रोपवीतगन्धादिपञ्चकफलताम्बूलदक्षिणाः षोडशेति वदन्ति । **अन्ये** तु ताम्बूलदक्षिणे समुच्चित्य फलं परिहृत्य नीराजनपुष्पाञ्जलिभ्यां षोडशेत्याहुः । अत्रैवाक्षतनीराजनाभ्यां अष्टादशेत्य**परे** ।

उपचारमन्त्रास्तु पुरुषसूक्तर्चस्तृचांशान्येन वा । षोडशपक्षे बह्वृचां पुरुषसूक्तं, अष्टादशपक्षे तु याजुर्वैदिकमष्टादशर्चमेव विनियोज्यम् । तत्रादौ प्रणव एका ऋक् श्रीसूर्यपदं चतुर्थ्यन्तम् उपचारविशेषवाचकं पदं द्वितीयान्तं समर्पयामि नमः इत्याकारा मन्त्राः । यद्वा

आदौ प्रणवस्ततस्तृचस्यैकश्चरणस्ततो मित्रादिक्रमेणैकैकं नाम ङेनमोऽन्तं उपचारपदं समर्पयामीति । एवं द्वादशोपचारा ऊह्याः । त्रयोदशादित्रये तु पादस्थाने एकैका ऋक् नामस्थाने चत्वारि चत्वारि नामानीति विशेषः । षोडशे तु तृचं सम्पूर्णं द्वादशनामानीत्यूह्यम् । अष्टादशोपचारपक्षेऽप्येवमेव । द्वादशोपचारान् कृत्वा त्रयोदशादिषट्के पादस्थाने एकैकार्धर्चा द्वे द्वे नामनी च देये, इति विशेषः ।

अथवा,

आदित्यश्च सहस्रांशुं प्रभातीतसमुद्भवम् ।
लोकनाथं जगच्चक्षुः सूर्यमावाहयाम्यहम् ॥

कालात्मा सर्वभूतात्मा वेदात्मा विश्वतोमुखः ।
यस्मादग्निस्वरूपस्त्वं ततः पाहि दिवाकर ॥

इति द्वौ श्लोकौ । एहि सूर्य सहस्रांशो० इति तृतीयश्लोको, गृहाणार्घ्यं नमोऽस्तु ते इति चतुर्थचरणविशिष्टो, न पुनरावाहनप्रकरणोक्तः, उदुत्यं जातवेदसमित्यारभ्य तृचान्तं त्रयोदशर्चं सूक्तं चेति षोडश मन्त्राः । अत्रापि पुरुषसूक्तवदेव मन्त्रकल्पना । तेषां तासाम् ऋचां स्थानेष्वेते सश्लोकास्त्रयोदशर्च, इतरत् पूर्ववत् । इदं चावाहनासनार्घ्यादिक्रमविशिष्टोपचारपक्ष एव, नाऽन्यपक्षे । तत्रापि पाद्यार्घ्ययोर्व्युत्क्रमपक्षे, उदुत्यमित्यृचा पाद्यं दत्त्वा एहि सूर्येत्यर्घ्यं दत्त्वाऽपत्येता यवो इति शिष्टानुपचारान् कुर्यात् ।

**वयं** तु, पुरुषसूक्तस्य **रुद्रयामल**सौरादिमतरीत्या सूर्यपरत्वस्यासाधारण्येन भानेऽपि शिवविष्ण्वादितन्त्रपर्यालोचनया तत्तदादिपरत्वस्याप्यसाधारण्येनैव भानादत एव सर्वदेवतासाधारणत्वेन पुरुषसूक्तमुपेक्ष्य सौरैकलिङ्गकमन्त्रसमवायादिममेव पक्षं प्रयुञ्ज्महे । शक्तिलक्षणयोरिव निरूढसाम्प्रदायिकलक्षणयोरिव वा स्पष्टास्पष्टलिङ्गयोरपि बलाबलस्य अर्थायातत्वात् । प्रतीतिशैघ्र्यमान्द्ययोरिहाप्यविशेषात् ।

॥ इत्युपचाराः ॥

**अथासनम्** । तत् तावत्सप्तविधम् । पौष्पं दारवं वास्त्रं चार्मणं कौशं तैजसं शैलं चेति ।

पौष्पं पुष्पौघरचितं कुशसूत्रेण वेष्टितम् ।
अहिफेनादिकुसुमैर्निर्गन्धै रचितं न हि ॥

यज्ञदारुसमुद्भूतमासनं मसृणं शुभम् ।
सुदर्शं नातिविस्तीर्णं दारवं तत्प्रचक्षते ।
अन्यदारुमयं वापि दद्यादासनमुत्तमम् ॥

कण्टकादिदारूणि वर्ज्यानि—

सकण्टकं क्षीरयुतं दारुसारविवर्जितम् ।
चैत्यश्मशानसम्भूतं वर्जयेच्च बिभीतकम् ॥

वास्त्रं चतुर्विधम् । वाल्कलं कोशजं फालं काम्बलं चेति । वृक्षत्वग्जन्यं वाल्कलम् । कृमिसार-जन्यं कोशजम् । त्रसराख्यं च । कार्पासजन्यं फालम् । काम्बलमपि काश्मीरहूणभेटान्तादि-देशजन्यम् । मृगरोमसमुद्भवमनेकविधम् । चार्मणमपि बहुविधम् ।

सिंहव्याघ्रतरक्षूणां छागस्य महिषस्य च ।
गजानां तुरगाणां च कृष्णसारस्य चर्मणः ॥

सूकरस्याथ मत्स्यस्य मृगाणां नवभेदिनाम् ।
चर्मभिः सर्वदेवानामासनं प्रीतिदं मतम् ॥

नवभेदिनां नवविधानां मृगाणामित्यर्थः ।

शम्बरो रोहितो रामो न्यङ्कू रङ्कुः शशो रुरुः ।
एणश्च हरिणश्चेति मृगा नवविधा मताः ॥

हरिणोऽपि तावत्पञ्चधा—

"हरिणस्यापि विज्ञेयः पञ्चभेदोऽत्र भैरव ।
ऋष्यः खड्गो मृगश्चैव पृषतश्च रुरुस्तथा" ॥ इति ।
यदासनं कुशमयं तत्तु कौशमिति स्मृतम् ।
आयसं सीसकं कांस्यं त्यक्त्वा ताम्रादि तैजसम् ॥
शैलरत्नमयं चारु शिलामयमपि स्मृतम् ।
पौष्पेषु तत्तद्देवस्य प्रीतिदैः कुसुमैर्वरम् ॥
दारवे चान्दनं श्रेष्ठं वास्त्रे काम्बलमुत्तमम् ।
चार्मणे शाम्बरं शस्तं तैजसेषु हिरण्मयम् ॥
शैले रत्नमयं श्रेष्ठं अन्तर्वेदिभवं कुशे ।

अन्तर्वेदिर्नाम गङ्गायमुनामध्यदेशः । शम्बरो गन्धमृगः । यत् तु—

न पत्रमासनं कुर्यात्कदाचिदपि पूजने ।
न प्राण्यङ्गसमुद्भूतमस्थिजं द्विरदादृते ।
मातङ्गदन्तसञ्जातमासनं साधकश्चरेत् ॥

इति वचनं तत्पूजकासनविषयम् । न देवतासनपरम् । तत्रापि प्राण्यङ्गजमिति विशेषणमस्थिजस्यैव ।

चर्मकम्बलादीनामन्यत्राहत्यविधानात्। विहितेतरपरं वा तद्विशेषणम्। यान्येवासनानि देवताया विहितानि तान्येव साधकस्यापि पौष्पभिन्नानि द्विरददन्तजसहितानि। परिणामे तु विशेषः।—

चतुर्विंशत्यङ्गुलेन दीर्घं काष्ठासनं मतम्।
षोडशाङ्गुलविस्तीर्णम् उच्छ्राये चतुरङ्गुलम्॥
षडङ्गुलं वा कुर्यात्तु नोच्छ्रितं चात आचरेत्।
वास्त्रं त्रिहस्तान्नो दीर्घं सार्धहस्तान्न विस्तृतम्॥
न त्र्यङ्गुलात्तथोच्छ्रायं पूजाकर्मणि संश्रयेत्।
यथेष्टं चार्मणं कुर्यात् पूर्वोक्तं सिद्धिदायकम्॥
षडङ्गुलाधिकं कुर्यान्नोच्छ्रितं तु कदाचन।
बहुदीर्घं बहूच्छ्रायं तथैव बहुविस्तृतम्।
दारु भूमिसमं प्रोक्तमन्यदास्तरणं मतम्॥

अत्र भूमिसममित्यनेन तत्र जपपूजादिनिषेध उक्तस्तदुपर्यासनान्तरावश्यकता च सिद्ध्यति।

जलमध्ये पूजनपक्षे, यथा–

तोये शिलामयं कुर्यादासनं कौशमेव वा।
दारवं तैजसं वाऽपि नान्यदासनमाचरेत्॥

जले आसनप्रक्षेपार्थस्थानाभावे तु मनसाऽऽसनकल्पनम्। स्वस्याप्युपवेशने यदि स्थलाभावस्तदोत्थायैव पूजा कार्या।

यद्यासितुं न संस्थानं विद्यते तोयमध्यतः।
अन्यत्र वा तदा स्थित्वा देवपूजां समाचरेत्॥
न यथेष्टासनो भूयात्पूजाकर्मणि साधकः।
काष्ठादिकासनं कुर्यान्मितमेव सदा बुधः॥

इत्यलं प्रसङ्गेन। अत्र, मण्डले पद्मादिकं विलिख्य तत्र यदि पूजा, तदाऽऽसनं मण्डलस्योत्तरतो विसृजेत्। पौष्पं तु पद्मस्योपरि मण्डलोत्तरे वा। पुष्पाक्षततोयबिन्दुं विना यदाच्छादकं वस्तु तत् पद्मस्य बहिर्दले द्वारादौ विनियोजयेत्।

अर्घ्यपाद्यं चाचमनं स्नानीयं नेत्ररञ्जनम्।
मधुपर्कं च नेत्रं च पुष्पं पद्मे निवेदयेत्।

**प्रतिमापूजनपक्षे** तु—

प्रतिमादिषु यद्योग्यं गात्रे दातुं च तत्तनौ।
दद्यादयोग्यं पुरतो नैवेद्यं भोजनादिकम्॥

॥ इति आसनम् ॥

" पादार्थमुदकं पाद्यं पादावयववारिणि " **इत्यमरात्** । विष्णुपादोदकधारणपानादिविधिष्वपि पादोदकशब्देन पाद्यस्यैव ग्रहणं, न स्नानीयादिजलानामिति **भक्तिमीमांसातन्त्रे शाण्डिल्यमुनिना,** " पादोदकं तु पाद्यमव्याप्तेः " इत्यधिकरणे निर्णीतत्वाच्च ।

पाद्यं श्यामकदूर्वाब्जविष्णुक्रान्ताभिरीरितम् । केवलं तोयमेव तदिति तु **क्वचित्** । तत् तैजसेन पात्रेण सर्वदेवेभ्यो देयम् । सूर्येतरेभ्यः शङ्खेन वा । " तदासनान्तरे दद्यान्मूलमन्त्रेण साधकः । " आसनान्तरे " आसनमण्डलयोर्मध्ये अर्घ्यपाद्यं " चेति **पूर्ववचनात्** । पद्मे वा पाद्यं देयम् ।

**॥ इति पाद्यम् ॥**

यथालब्धद्रव्याष्टकसहितं **सलिलमर्घ्यम्** ।

गन्धपुष्पाक्षतयुतकुशाग्रतिलसर्षपाः ।
दूर्वा चेति क्रमादर्घ्यद्रव्याष्टकमुदीरितम् ॥
न दद्याद्भास्करायार्घ्यं शङ्खतोयैर्विचक्षणः ।
तथा न शुक्तिपात्रेण विष्णवेऽर्घ्यं निवेदयेत् ॥

अर्घ्यं शिरसि दद्यादिति **केचित्** ।

**॥ इति अर्घ्यः ॥**

उदकं दीयते यत्तु प्रसन्नं फेनवर्जितम् ।
आचमनाय देवेभ्यस्तदाचमनमुच्यते ।
कर्पूरवासितं वापि कृष्णागुरुविधूपितम ॥

तत्तैजसेन पात्रेण शङ्खेनान्येभ्यो देयम् ।

जातीलवङ्गकङ्कोलैर्मतमाचमनीयकम् ।
केवलं तोयमात्रेण दद्याद्वाऽन्यैरमिश्रितम् ॥

पाद्यमाचमनं च स्वस्वपात्रे किञ्चिदवशेष्य दद्यात् । स शेषः कलशजलेनाभिवर्धनीयः ।

**॥ इति आचमनम् ॥**

मध्वादिद्रव्यपञ्चकं सृष्टिन्यायेन मधुपर्कपदवाच्यम् ।

दधि सर्पिर्जलं क्षौद्रं सितेत्येभिस्तु पञ्चभिः ।
प्रोच्यते मधुपर्कोऽयं सर्वदेवौघतुष्टिदः ॥

जलं तु सर्वतः स्वल्पं सितादधिघृतं समम् ।
सर्वेषामधिकं क्षौद्रं मधुपर्के प्रयोजयेत् ।
"दधिक्षौद्रमिति द्वाभ्यां मधुपर्कं परे जगुः ॥"

इह कांस्यपात्रं प्रशस्तम् । मधुपर्कोत्तरं पुनराचमनीयं पूर्ववद्देयम् । इदञ्च मधुपर्काङ्गमेव न पुनरुपचारान्तरम् ॥

॥ इति मधुपर्कः ॥

आदौ तु सुगन्धितैललेपनं, ततः पिष्टातकादिभिर्निर्णेजनं पञ्चगव्यं प्रान्ते तोयमपि केवलं देयमिति यत्तत्स्नानपदवाच्यम् ।

पिष्टातकोऽथ कस्तूरी रोचना कुङ्कुमं तथा ।
गुडः क्षौद्रं पञ्चगव्यं सर्वौषधिगणं सिता ॥
स्वर्णरत्नोदकं प्रान्ते कर्पूराद्यधिवासितम् ।
तैजसैः कांस्यपात्रैर्वा शङ्खैर्वा तन्निवेदयेत् ॥
मण्डले केसरे देयमग्रेषु प्रतिमास्वपि ।
शिवलिङ्गे तथाऽऽभोगे पीठे देवतनौ तथा ॥
सद्यः स्निग्धे मृण्मये वा सर्पिः सिन्दूरजे तथा ।
श्रीचन्दननिघर्षे वा लेपने प्रतिमातनौ ।
अन्तिकस्थापिते खड्गे स्नापयेद्दर्पणेऽथवा ॥

अत्र पाद्यादिषु प्रक्षेप्यद्रव्यालाभे तण्डुलानेव तत्तद्भावनया क्षिपेत् ।

"द्रव्यालाभे प्रदातव्याः क्षालितास्तण्डुलाः शुभाः ।"
"तण्डुलान् प्रक्षिपेत्तेषु द्रव्यालाभे तु तत्स्मरन् ।" इति वचनात् ।

सर्वेऽप्येते उपचारा अर्घ्यपात्रस्थोदकेन प्रोक्षिता एव देयाः । नान्यथा ।

॥ इति स्नानम् ॥

वस्त्रं तावद्योनितश्चतुर्विधम् ।

कार्पासं काम्बलं वाल्कं कोशजं वस्त्रमिष्यते ।
तत्सर्वं पूजयित्वैव मन्त्रैर्देवाय चोत्सृजेत् ॥

वस्त्राण्यस्त्रेणार्घ्यवारिणा सम्प्रोक्ष्य धेनुमुद्रया पीयूषबीजेनामृतीकृत्य, बृहस्पतिदेवताकेभ्यो वस्त्रेभ्यो नम इत्यक्षतादिप्रक्षेपेण पूजयित्वा तत्तन्मन्त्रेण देवतायै समर्पयेत् । एष एव सर्वोपचारसाधारणः पदार्थपूजनक्रमः । मन्त्रे तु परं विशेषः । स च तत्र तत्रैव स्पष्टीभविष्यति ।

उत्तरीयोत्तरासङ्गे नीचोलो मोदचेलकः।
पिधायकं च पञ्चैतान्यस्यूतानि प्रयोजयेत्॥
शानवस्त्रं निशानं च तथैवातपवारणम्।
तत्रातपं तथा भूष्यं पञ्चस्यूतान्यदुष्टये॥
पताकाध्वजकुम्भादौ स्यूतं वस्त्रं प्रयोजयेत्।
निर्दशं मलिनं जीर्णं छिन्नं गात्रविलिङ्गितम्॥
परकीयं चाखुजग्धं शुचिविद्धं तथोषितम्।
उप्तं केशविधूतं च श्लेष्ममूत्रादिदूषितम्॥
प्रदाने देवताभ्यश्च दैवे पित्र्ये च कर्मणि।
वर्जयेत्स्वोपयोगे च यज्ञादावुपयोजने॥

शुचिविद्धं अग्निस्पर्शेन वर्णान्तरमापन्नम्। उषितं दग्धमित्यर्थः।

रक्तं कौशेयकं देव्याः पीतं कौशेयकं हरेः।
रक्तकम्बलकः शम्भोः परमप्रीतिसाधनाः॥
कार्पासं सर्वतो भद्रं चित्रं सर्वसुरप्रियम्।
नैकान्तरक्तं श्रीविष्णोः शम्भोर्नैकान्तनीलकम्॥
नीलीरक्तं तु यद्वस्त्रं सर्वथा तन्निषेध्यते।
विचित्रे वाससि पुनर्नीलीरङ्गो न दोषकृत्।
देव्या एवं च तत्तादृक् नान्यस्य तु कदाचन॥

॥ इति वस्त्रम्॥

इहैव ब्रह्मदैवत्यायोपवीताय नमः इति सम्पूज्योपवीतं पुंदैवतेभ्यो वस्त्रस्थाने समर्पयेत्। विष्णुदैवत्येभ्यो मुकुटाद्याभरणेभ्यो नमः इति पूजयित्वा यथासम्भवमाभरणानि दद्यात्।

"किरीटं च शिरोरत्नं कुण्डलं च ललाटिका" इत्यादि पुराणादिभेदेन बहवो भेदा अलङ्काराणां तत्र तत्र प्रतिपादिताः।

घण्टा चामरकुम्भादि पात्रोपकरणादिकम्।
प्रावाराः पानपात्रं च गण्डको गृहमेव च॥
पर्यङ्कादि यदन्यच्च सर्वं तदुपभूषणम्।
शिरोगतानि चेदत्र सौवर्णान्येव सर्वदा॥
ग्रैवेयकादिकं सर्वं सौवर्णं राजतं तु वा।
निवेदनीयं देवेभ्यो नान्यत्तैजससम्भवम्॥

रीतिरङ्गादिसञ्जातं पात्रोपकरणादिकम् ।
दद्यादायसवर्ज्यं तु भूषणं न कदाचन ॥
सर्वं ताम्रमयं दद्याद्यत्किञ्चिद्भूषणादिकम् ।
सर्वत्र स्वर्णवत्ताम्रमर्घ्यपात्रे ततोऽधिकम् ॥
ताम्रे देवाः प्रमोदन्ते ताम्रे देवाः सदा स्थिताः ॥
सर्वदोषप्रतीकारं तस्मात्ताम्रं प्रयोजयेत् ॥

॥ इति भूषणम् ॥

**गन्धाः** पञ्चविधाः ।

चूर्णा घृष्टा दग्धसाराः संसर्गजाः प्राण्यङ्गजाश्चेति । चूर्णाश्चन्दनकाष्ठादेरिति सूक्ष्माश्चूर्णादय एव । घृष्टाश्चन्दनागुर्वादिकाष्ठानां घर्षणजन्यपङ्करूपाः । दग्धसारास्तु सुगन्धितृणपुष्पकाष्ठानां पाकविशेषसमुत्पन्नतद्रसरूपाः । संसर्गजास्तावत् बहुद्रव्यसंमर्दनजन्याः, यक्षकर्दमादयः । तत्तद्देवतायोग्यं गन्धाष्टकं च ॥

सेध्यकं कुङ्कुमं कुष्टं ह्रीबेरागुरुचन्दनम् ।
जटामांसी मुरश्चेति **सौरं गन्धाष्टकं** मतम् ॥

प्राण्यङ्गजाः कस्तूरीमुष्कादयः । केसरकर्पूरादीनामपि यथायथमत्रैव चूर्णादिष्वन्तर्भावो बोध्यः ।

सर्वेषु गन्धजातेषु प्रशस्तो मलयोद्भवः ॥

विष्णुदेवतेभ्यो गन्धेभ्यो नमः इति गन्धानभ्यर्च्य यथार्हस्थानेषु निवेदनीयाः । विष्णुदेवत्याय गन्धाय नमः इति **केचित्** प्रयुञ्जते । तन्न ।

" गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः ।
स एव द्रव्यवचनः पुंसि भूम्नि च गद्यते " ॥ इति **विश्वकोशविरोधात्** ।

॥ इति गन्धाः ॥

वनस्पतिदेवतेभ्यः पुष्पेभ्यो नमः, इति सम्पूज्य पुष्पाणि समर्पयेत् । यद्यपि—

" द्विजस्तृणैधः पुष्पाणि सर्वतः स्वयमाहरेत् ।
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः ॥

इति निषेधस्तथाऽपि मालाकारेणाहरणेऽनुमतक्रये न दोषः । **वचनान्तरे** मालाकारस्य प्रतिप्रसवात् विक्रयनिषेधेनोपसंहाराच्च । एवमारामाधिपतेरननुज्ञया पुष्पचयननिषेधो ब्राह्मणेतरपरः । " देवतार्थं तु कुसुममस्तेयं मनुरब्रवीत् " इति तु ब्राह्मणविषयमित्यादयो विशेषाः **ग्रन्थान्तरेषु** बहवो व्यक्ताः ।

नाक्षतैरर्चयेद्विष्णुमाम्रातैर्न दिवाकरम् ।
न दूर्वयाऽर्चयेद्दुर्गां न केतक्या सदाशिवम् ।
न तुलस्या गणाधीशं एकविंशतिकं विना ॥

आम्रातक आम्रसदृशो गौडदेशे क्षेत्रे च 'अम्बा' इति भाषया प्रसिद्धः । एकविंशतिपत्रान्तर्गतत्वात् तुलस्यास्तावदर्पणे न तुलसीनिषेधः । पार्थक्येन तु नार्पयेदित्यर्थः ।

पूजयेत्परमेशानीं पुष्पाभावे तु पत्रकैः ।
पत्राणामप्यलाभे तु तृणगुल्मौषधादिभिः ॥
ओषधीनामलाभे तु तत्फलैरपि पूजयेत् ।
*सितैस्तस्याप्यलाभे तु मानसीं भक्तिमाचरेत् ॥
पत्रं वा यदि वा पुष्पं फलं नेष्टमधोमुखम् ।
पुष्पाञ्जलिविधिं हित्वा यथोत्पन्नं तथाऽर्पयेत् ।
दूर्वाः स्वाभिमुखाग्राः स्युर्बिल्वपत्रं त्वधः कृतम् ॥

पुष्पाञ्जलौ नायं निषेधः । अधःकृतं अनुत्तानम् । दूर्वासु स्वसम्मुखाग्रत्वोक्त्या बिल्वे तथा नेति सिध्यति । पुष्पविशेषभेदेन फलतारतम्यादिकं मूलग्रन्थेषु स्पष्टमिति विस्तरभिया नेह प्रतन्यते ।

॥ इति पुष्पम् ॥

ततस्तृचषडङ्गन्यासमन्त्रोत्तरं हृदयशक्तिं पूजयामि इत्यादिकं संयोज्य षडङ्गशक्तीः पूजयेत् । यथा । ॐ उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवं हृदयाय नमः हृदयशक्तिं पूजयामि । एवं शिरःशक्तिं शिखाशक्तिं कवचशक्तिं नेत्रशक्तिमस्त्रशक्तिं पूजयेत् । अथवा षड्दीर्घमात्रं लज्जाया योजयेत् । ॐ ह्रां हृदयाय नमः हृदयशक्तिं पूजयामीत्यादि ।

॥ ततो देवस्याङ्गपूजा ॥

ये तु धूपोत्तरमिमां पूजामिच्छन्ति तेषां प्रमाद एव ।
मार्तण्डो भानुरादित्यो हंसः सूर्यो दिवाकरः ।
तपनो भास्करो विश्वचक्षुः सर्वात्मको दश ॥
पादयोर्जङ्घयोर्जान्वोरूर्वोः कट्योश्च नाभिके ।
हृदि कण्ठे मुखे मूर्ध्नि पूजनं दशनामभिः ॥

प्रणवो ङे नमोऽन्तं नाम पादावित्याद्यङ्गपदं द्वितीयान्तं पूजयामि पदं चेति मन्त्राः । अथवा

*सितैः सर्षपैरिति पाठः ।

आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् ।
मार्तण्डश्च जगच्चक्षुरिति नामभिरष्टभिः ।
पादादिहृदयान्तेषु मूर्ध्न्यर्चेति मतान्तरम् ॥" इत्यङ्गपूजा ॥

**अथावरणानि**—तानि च पञ्चदश द्वादश सप्त त्रीण्येकमेव वा यथासंप्रदायं शक्तितारतम्येन वा व्यवस्थितानि । पूर्वोक्तपक्षेषु चतुर्थपक्षमवलम्ब्योच्यन्ते । तत्रादौ प्रथमावरणदेवताभ्यो नम इति पुष्पाञ्जलिना समष्टिपूजां कुर्यात् ॥

"मार्तण्डो भानुरादित्यो हंसः सूर्यः दिवाकरः ।
तपनो भास्करश्चैव प्रथमावृतिदेवताः ॥"

कर्णिकायामेव दिक्क्लृप्त्या पूर्वादिप्रादक्षिण्येन सम्पूज्य, प्रधानदेवतायै पुष्पाञ्जलिं दत्त्वा,

"अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥

इति सामान्यार्घ्यजलेन पात्रान्तरोद्धृतेन देवस्य दक्षिणहस्ते आवरणपूजां समर्प्य नमेत् ।

पञ्चदलेष्वेतेषां पूजा, इति **केचित्** । समष्टिपूजनप्रधानपुष्पाञ्जलिपूजासमर्पणानि सर्वावरणसाधारणानि । द्वितीयादिपदानां यथालिङ्गमूहः । इति विवेकः ।

षष्ठैकादशादावेकाक्षरन्यूनाधिक्येऽपि न छन्दोभङ्ग इति मन्तव्यम् ।

"न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्यां" इति **वचनात्** । अस्य च प्रपञ्चोऽस्माभिश्छन्दोभास्करे सविस्तरं दर्शितः ।

ॐ मार्तण्डाय नमो मार्तण्डमावाहयामि स्थापयामि पूजयामि नम इति वा, ॐ मार्तण्डाय नमः इत्येव वा मन्त्र, इति पूर्ववत् पक्षद्वयमिति ज्ञेयम् । पक्षद्वयेऽप्याद्यमक्षरं सबिन्दुकं योज्यमित्यन्ये । **केचित्तु**, प्रभूता विमला साराऽऽराध्या परमसुखी श्वेताश्वेतपत्रा संवीतका" इति प्रथमावरणे पूजयन्ति । मध्ये तु वर्तमानमासाधिपतिं च प्रथमपक्षे पूजयेदिति **केचित्** । मासाधिपास्तु ।

"अरुणः सूर्यो भानुस्तपनः सविता रविर्गभस्तिश्च ।
अर्यमहिरण्यरेता दिवाकरो मित्रविष्णू च ।
एते द्वादशसूर्या माघाद्येषूदयन्ति मासेषु ॥

निःसूर्योऽधिकमासो मलिम्लुचाख्यस्ततः पाप" इति गणितः । अत्र प्रथमार्यायां "अर्यमपदे प्रथमाक्षरस्य संयोगपरत्वेऽपि लघुत्वमेव, क्रमपरत्वाद्यङ्गीकारात्" इति **छन्दःकौस्तुभे** निवेदितमस्माभिः । अधिमासे तु "मण्डलं तपते रवेः" इति वचनेन चैतन्यस्याभावान्मध्ये पूजाभावो, यो मासोऽधिकः तदधिकस्यैव वा पूजनम् । "षष्ट्या तु दिवसैर्मासः कथितो

बादरायणे"रिति वचनात् । क्षयमासे तु द्वे नामनी पूज्ये । शाक्तानां तिथिनित्यापूजनवत् । "चैत्रमासे तु वेदाङ्ग" इत्यादिवचनानुसारेण तु चैत्रादित्रये वेदाङ्गभान्विन्द्रा भाद्रपदे यम इति पूर्वस्माद्विशेषः । अत्र तुल्यबलत्वाद्विकल्प एव शरणम् ।

॥ इति प्रथमावरणम् ॥

लज्जाया एकैको दीर्घस्तृचस्यैकैकः पादो मित्ररव्याद्येकैकं नाम ङे नमोऽन्तमिति मन्त्रैः कर्णिकाग्रवर्तुले पूर्वादिप्रादक्षिण्येन मित्रादिद्वादशकं यजेत्—"द्वितीयावरणे पूज्या मित्राद्या द्वादश क्रमात्" इति वचनादिति केचित् । दीप्तादिनवशक्तयः पूज्या इत्यपरे । पूर्वोक्तेनादित्यादिनामाष्टकेनेति तु प्रभूतादिवादिनः । क्वचित्तु दलमूले द्वितीयावृत्तिरित्युच्यते । तत्र दलमूलं कर्णिकाग्रवर्तुलमेव ।

॥ इति द्वितीयावरणम् ॥

अथ दलमूलमारभ्य दलाग्रपर्यन्तमधो वक्ष्यमाणान्यावरणानि पूज्यानि ।

आवरणे तु तृतीये भास्करतपनौ रविः पूषा ।
मार्तण्डार्कजगन्नाथाऽऽदित्याः पूर्वतः पूज्याः ॥

'पूर्वत' इति 'ल्यब्लोपे पञ्चमी' प्राग्दिशमारभ्येत्यर्थः । अन्ये तु

आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् ।
मार्तण्डश्च जगच्चक्षुस्तृतीयावृतिदेवताः ॥"

इत्याहुः । "तृतीयावरणे पूज्याः सूर्याद्याः पूर्वतो ग्रहाः" इति वचनात् सूर्यादीनेव देवता वदन्ति केचित् । तत्र प्रागादिक्रमेण सूर्यादीनष्टौ सम्पूज्य केतुं मध्ये पूजयन्ति कतिचित् । केचिच्च नवमस्थाने सूर्यमाहुः । सूर्यमेव प्रथमं मध्ये संपूज्यासंपूज्यैव वा सोमादीनामभितः पूजनं इति तु युक्तं पश्यामः । सौराष्टाक्षरे प्रयोजनतिलकाख्यसौरमन्त्रेऽपि भुवनेशीचतुरक्षरस्थ सौरपीठेऽपि आवरणेषु सोमादीनामेव ग्रहणात् । तेषु सौरतन्त्रेषु तु ग्रहाणामन्य एवावस्थानप्रकार उक्तः ।—

"प्रागादिदिशासंस्थाः शशिबुधगुरुभार्गवाः क्रमेण स्युः ।
आग्नेयादिष्वश्रिषु धरणिजमन्दाहिकेतवः पूज्याः ॥" इति ।

अही राहुः ।
अनुक्तमपेक्षितमविरुद्धं अन्यतो ग्राह्यमिति न्यायेन स एवात्र क्रम इति तु युक्तम् ।
अन्ये तु

"मध्ये सूर्यो वह्नौ याम्ये शैव तथोदीच्याम् ।
प्राचीप्रत्यङ्निर्ऋतिवायुषु चन्द्रादयः पूज्या ।" इति मन्यन्ते । अथैतेषां

रूपाणि । तत्र षोढान्यासान्तर्गतग्रहन्यासे—

पद्मरागसितारक्तश्यामपीतारुणच्छवीन् ।
धूमेन्द्रनीलधूम्राभान् ग्रहान्ध्यात्वा न्यसेत्सुधीः । ”

इत्युक्तम् । अन्येषु तु सौरतन्त्रेष्वन्यथोक्तम्—

“ शुभ्रासितपीतशुक्ला रक्तासितधूम्रकृष्णकाः क्रमशः ।
चन्द्राद्याः केत्वन्ता वामोरुन्यस्तवामकरलसिताः ॥

अपरकराऽभयमुद्रा विकृतमुखोऽहिः करायुताञ्जलियुक् ।
दंष्ट्रोग्रास्यो मन्दः सुवर्णसदृशांशुकादिभूषश्च । ” इति ।

एते च सोमादिग्रहक्रमेणैव पूज्या न दिक्क्रमेणेति ।

॥ इति तृतीयावरणम् ॥

चतुर्थावरणे पूज्या वसवोऽष्टौ धरादयः ।
धरो ध्रुवश्च सोमश्च अह्वयश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥
अह्वय इत्यदन्तः प्रथमैव ।
“ आदित्याद्यष्टकं केचिद्भास्कराद्यष्टकं परे ।
चतुर्थावृतौ पूजयन्ति ।

॥ इति चतुर्थावरणम् ॥

एकादशानां रुद्राणां पञ्चमावरणेऽर्चनम् ।
वीरभद्रस्ततः शम्भुर्गिरीशश्चाज एकपात् ॥
अहिर्बुध्न्यः पिनाकी च भुवनाधीश्वरस्तथा ।
दिशांपतिः पशुपतिः स्थाणुरेकादशो भवः ॥

अत्राऽजएकपादित्येकं नाम । समस्तमसमस्तं वा । एवमहिर्बुध्न्य इत्यपि । प्रथमपक्षे समानाधिकरणस्य विशेषणस्य विभक्तेरलुक् । उत्तरपक्षे या या विभक्तिः सैव प्रथमपदेऽप्यलुप्ता कार्या विश्वे देवा, विश्वान् देवान्, विश्वैर्देवैर्विश्वेभ्यो देवेभ्यो विश्वेषां देवानामित्यादिवत् । अत एव, “ अहिर्बुध्न्य मन्त्रं मे गोपाय, ” इति प्रयोगोऽपि । तस्मादजायैकपदे नमः, अहये बुध्न्याय नमः, इति प्रयोगः ।

ब्राह्म्याद्यष्टकमन्ये तु दीप्तादिनवकं परे ।

यद्यपि ब्राह्म्याद्याः सप्तैव मातरः तथाप्यष्टमस्थाने अरुणः पूज्यः । **केचित्तु** अष्टमस्थाने दुर्गां, **परे** तु महालक्ष्मीं, **अन्ये** तु सप्तमातृभ्य इति समष्टिं पूजयन्ति । तत्सर्वं मन्त्रशास्त्रसम्प्रदायाज्ञानकृतम् ।

"सौरविषयेऽरुणोऽष्टमो, दुर्गाविषये चण्डिका, अन्यत्र महालक्ष्मीरिति व्यवस्थायाः **प्रपञ्चसारे** स्पष्टत्वात् ।"

मातॄणां वर्णादयस्तु—

ब्राह्मी श्वेता चतुर्वक्त्रा साक्षसूत्रवराभया ।
माहेश्वरी त्रिनयना ध्येया कुन्देन्दुपाण्डुरा ।
शूलं कपालं परशुं हरिणं बिभ्रती करैः ॥

अत्रैव हरिणस्थाने दुन्दुभिं **केचिदूचिरे** ।

कौमारी पीतवर्णा सा शक्त्यभीवरतोमरा ।
सदण्डाङ्कुशखट्वाङ्गपाशेयमिति **केचन** ॥
शङ्खचक्रगदापद्मकरा, श्यामा तु वैष्णवी ।
घण्टां कपालं **केऽप्याहुः** परित्यज्य गदाम्बुजे ॥
हलमुसलखड्गखेटैः श्यामा कोलानना तु वाराही ।
हलमुज्झित्य **परे** जगुरभयं हस्ते दधानेति ॥
वज्रोत्पलाभ्यामिन्द्राणी श्यामा **केचित्तु** तोमरम् ।
अङ्कुशं कुलिशं पाशं दधानेति प्रचक्षते ॥
चामुण्डा घननीला शूलडमरुखड्गवेतालान् ।
दक्षैर्वामैस्तु करैः कपालघण्टाहिसि (?) खेटकान् दधती ॥
कपालं नृशिरः शूलं खड्गं चेति जगुः **परे** ।
पद्मद्वयदर्पणमातुलिङ्गहस्ता महालक्ष्मीः ।
दर्पणमेकं पद्मं त्यक्त्वाऽक्षस्रक्कपालमप्याहुः ॥

**योगिनीहृदयोक्ता** आद्या **गीर्वाणेन्द्रैरुक्ता** द्वितीया, इति पक्षभेदः ।

**॥ इति पञ्चमावरणम् ॥**

धात्राद्या द्वादश ब्रध्नाः षष्ठावरणदेवताः ।
धाताऽर्यमा च मित्रश्च अंशुमानरुणो भगः ।
इन्द्रो विवस्वान् पूषा च पर्जन्यस्तपनविष्णुकौ ॥

अत्र दिग्दलेषु द्वौ द्वौ विदिग्दलेषु एकैक इति विवेकः। केचित्तु प्रथमावरणवन्मार्तण्डादिकं मध्ये मासाधिपं च पूजयन्ति। परे तु—

आराध्या कपिला सारा प्रभूता इति तु स्त्रियः।
दण्डी च पिङ्गलो धाता विधातेति तु पूरुषाः॥
षष्ठावरणे पूज्या, इत्याहुः। दण्डिस्थाने दण्ड एव युक्तः।

॥ इति षष्ठावरणम् ॥

मासाधिपास्तु माघाद्याः सप्तमावृतिदेवताः। ते च पूर्वं द्वेधा कथिताः। मन्त्रेषु तु, माघमासाधिपतयेऽरुणाय नम इत्यादिरीत्या मन्त्रान् वदन्ति। परे तु पूर्ववदेव।

दिग्गजान् पूजयन्त्यन्ये वसूनन्ये धरादिकान्।
ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः।
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः॥

धरादयस्तूक्ताः॥

॥ इति सप्तमावरणम् ॥

अष्टमावरणे पूज्या असिताङ्गादिभैरवाः।
असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तभैरवः।
कपाली भीषणश्चैव संहारश्चाष्टभैरवाः॥

ॐ अं असिताङ्गभैरवाय नमः इत्यादिरीत्या सर्वत्र भैरवपदयोगं बहव आहुः। ते वसुरुद्रादित्यमातृदिग्गजादिपदपल्लवितत्वापादनस्येष्टतामेव शरणीकरिष्यन्ति।

केचित् ब्राह्म्यादिका मातॄरिन्द्राद्यान्सायुधान्परे।
इन्द्रो वह्निः पितृपतिर्नैऋतो वरुणो मरुत्॥
कुबेर ईश इत्यष्टौ पूर्वादिदिगधीश्वराः।
अधोदिगीश्वरः शेषो विधातोर्ध्वदिगीश्वरः॥

एते च यज्जात्यधिपा यदायुधा यद्वाहना यस्य पार्षदास्तत्तद्वाचकविशेषणविशिष्टाः पूज्याः। तदुक्तम्—

"इन्द्राग्नियमनिशाचरवरुणानिलशशिशिवाहिपतिविधयः।
जात्यधिपहेतिवाहनपरिवारान्ताः क्रमेण यष्टव्याः"

इति। अत्र विधिरन्ते गणितः। क्वचिदनन्त एवान्ते गण्यते। हेतिरायुधम्। शशिशब्देन सोमपदाभिधेयः कुबेरो ग्राह्यः।

सुरतेजः प्रेतरक्षो जलप्राणाधिपास्तथा।
नक्षत्रविद्यानागानां लोकस्याप्यधिपाः क्रमात्॥

कुलिशं शक्तिर्दण्डः खड्गः पाशोऽङ्कुशं गदा शूलम्।
चक्रं पद्मं च दिशामीशानामायुधानि जगुः॥
ऐरावतमेषमहिषप्रेतनरैणशशवृषभाः।
कूर्मो हंसो वाहा दिक्पालानाममी कथिताः॥

यत्र या प्रधानदेवता तत्र तत्पार्षदत्वेन कीर्तनं, तत्तद्बीजयोजनाऽपि कार्या। तानि तु लं रं हं षं वं यं सं शं ह्रीं अं इति दश। **अन्ये** तु यरलवादीन् सबिन्दुकानष्टौ लज्जापाशौ द्वे इति क्रमेण संयोज्य पठन्ति। अनेन तत्तदाद्यक्षरस्य सबिन्दुकस्य बाधः। तेन, ॐ लं इन्द्राय सुराधिपतये कुलिशधरायैरावतवाहनाय श्रीसूर्यपार्षदाय नमः, इन्द्रं सुराधिपतिं कुलिशधरमैरावत-वाहनं श्रीसूर्यपार्षदमावाहयामि स्थापयामि पूजयामि नम इत्यादयो मन्त्राः।

अथ ध्यानमात्रोपयोगिरूपाणि—

पीतः पिङ्गः कृष्णो धूम्रः श्वेतश्च धूम्रसितशुक्लाः।
कीशारुणाम्बुजाभा लोकेशा वासवादयः कथिताः॥

कीशो वानरः। **केचित्** तु इन्द्राय नम इत्येवमेव मन्त्रानुल्लिख्याभ्यर्च्य पुनस्तेनैव क्रमेण वज्राय नम इत्यादिरीत्याऽऽयुधानि पूजयन्ति। तन्न। इन्द्रादिदैवत्यावरणाद्वज्रादिदैवत्यावरणं यत्र भिन्नत्वेन निर्दिश्यते तत्रैवायुधानां पृथगर्चा नेतरत्रेति तान्त्रिकसिद्धान्तविरोधात्। येषां मते पृथगेवायुधावरणं तेषां मते त्विष्टापत्तिः। परं तु तत्पक्षेऽपि हेतीनां पृथगर्चनेऽपि शक्राद्याः सायुधा एव पूज्याः।

"स्वस्वायुधं स्वहस्ताभ्यां दधन्तो निजमूर्धनि।
वराभये च हस्ताभ्यां ध्येया आयुधदेवताः॥ **क्रमदीपिकायाम्**।
"कनकरजततोयदाभ्रशङ्खाऽरुणहिमनीलजपाप्रवालभासः।
क्रमत इति रुचा तु वज्रपूर्वा रुचिरविलेपनवस्त्रमाल्यभूषाः" इति।

शङ्खस्थाने विद्युत् जपापुष्पस्थाने करमर्दफलं च क्वचित्पठ्यते।

**। इत्यष्टमावरणम्।**

नवमावरणे पूज्या ब्राह्म्याद्याः सप्त सारुणाः।
वज्रादीनपरे केचिदसिताङ्गादिभैरवान्॥

**॥ इति नवमावरणम्॥**

मेषाद्या राशयः पूज्या दशमावरणे क्रमात्।
"मेषो वृषो मिथुनकर्कटसिंहकन्या
तौलिश्च वृश्चिकधनुर्मकराः सकुम्भाः।

मीनश्च राशय इति प्रथिता"...इति।
इन्द्रादीन् सायुधानन्ये सचन्द्रादीन्ग्रहान्परे।

॥ इति दशमावरणम् ॥

एकादशी तु शक्राद्यैरायुधैर्द्वादशावृतिः॥

**केचित्**—पूर्वादिदिक्षु
"अरुणं सप्ततुरङ्गान् दण्डं पिङ्गलमेव च।
ईशान्यादिविदिक्षु
गणपतिदुर्गाक्षेत्राधिपतीन् वास्तोष्पतिं च कथयन्ति।
द्वादशे त्वावरणे—
मित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्रर्कभास्करा देवता इति वर्णयन्ति।

**परे** तु
"एकादशेऽसिताङ्गदयः,
द्वादशे तु—
श्वेतश्च श्वेतपद्मश्च विभूतश्च प्रभूतकः।
आधारः कमलम्"।

॥ इति एकादशद्वादशावरणे ॥

मासाधिपस्य पश्चाच्छ्रीदुर्गाद्यास्तु मण्डलाकृतयः।
दुर्गागणपतिसारथ्यरुणेडापिङ्गलाऽरुणाः सप्त॥
हरसारात्राराध्यः सप्ततुरङ्गाश्च दण्डपिङ्गलकौ।
मिलिताववेकको वा तत्पश्चाद्द्वारपालौ च।
श्रीमासाधिपमध्ये परमसुखाख्योऽपि सम्पूज्यः॥

एता मण्डलदेवता इत्यर्च्यन्ते।

"मध्ये मासाधिपस्तत्प्रागरुणः सप्त वाजिनः।
माठरः पिङ्गलो दण्डस्ततो गणपतिस्ततः॥
दुर्गा च क्षेत्रपालश्च वास्तोष्पतिरनन्तरम्।
सम्पूज्या वलयाकारा"
इति **केचन** मन्यन्ते।

अत्र 'अरुणः सप्तवाजिनः' इत्येकस्यामेव दिशि पूजयेत्।

**अन्ये** वदन्ति हृल्लेखा गङ्गा रक्ता च कालिका ।
पञ्चमी तु महोच्छुष्मा षष्ठः प्रोक्तो दिवाकरः ॥
ऊर्ध्वाधोदक्षिणप्रत्यक्–उदक्प्राक्षु क्रमाद्यजेत् ।

**॥ इति त्रयोदशावरणम् ॥**

एवमष्टदलं सम्पूज्य द्वादशदले पूर्वादिप्रादक्षिण्येन मित्रादिद्वादशकं यजेत् । इह हृल्लेखा षड्दीर्घयोजनं नास्ति । किन्त्वाद्यक्षरमेव सबिन्दुकम् ।

**॥ इति चतुर्दशावरणम् ॥**

मित्राद्यग्रभागेषु अरुणादीन् मासाधिपतीन् यजेत् ।

**॥ इति पञ्चदशावरणम् ॥**

अत्र, यद्यपि प्रत्यावरणं नानाविधाः पक्षाः **प्रदर्शितास्तथापि** न तेषामैच्छिको विकल्पः । मानाभावात् । एकस्यैवावरणदेवतासङ्घस्य कदाचिद्द्विस्त्रिः पूजनापत्तेश्च । किन्तु पूर्वोत्तरावरणापेक्षो व्यवस्थितो विकल्पः ।

तदयं निष्कर्षः ।

प्रथमे मार्तण्डाद्या दीप्ताद्या भास्कराद्याश्च ।
आदित्याद्यास्तदनु ब्राह्म्याद्याः पूजनीयाः स्युः ॥
आराध्याद्या ऐरावतमुख्या इन्द्रमुख्याश्च ।
वज्राद्याः सोमाद्या असिताङ्गाद्यास्ततः पूज्याः ॥
श्वेताद्याः श्रीमुख्या मित्राद्याश्चारुणाद्याश्च ।
पञ्चदशावरणानां पक्षोऽनेन क्रमेण विज्ञेयः ॥

अत्र तृतीयचतुर्थे आवरणे व्युत्क्रमेण वा पूज्ये । अथवा—

आदौ मार्तण्डाद्या मित्राद्याः सोममुख्याश्च ।
धरवीरभद्रधातृप्रमुखा अरुणाऽसिताङ्गाद्याः ॥
ब्राह्म्याद्या मेषाद्या इन्द्राद्याश्चैव वज्राद्याः ।
मासाधिपाभितः स्थाः सारथ्यरुणादयः पश्चात् ।
मित्राद्या अरुणाद्याः पश्चदशैताश्च वाऽऽवृतयः ॥

अत्र त्रयोदशे आवरणे अरुणादिपदेन माघादिमासपतिभ्रमनिरासाय सारथित्वं मासाधिपाभितःस्थत्वञ्च विशेषणम् । तेनैतत्पक्षे "मध्ये मासाधिपस्तत्प्राक्" इत्यादि श्लोकोक्तावरणपरिग्रहः ।

**अथ द्वादशावरणपक्षे—**

मार्तण्डमित्रसोमाद्यान् वज्रान्तान्द्वादशार्चयेत् ।
अनावरणरूपाऽपि हृल्लेखाद्या त्रयोदशी ॥

सारथ्यरुणमुख्या वा कर्तव्याऽत्र त्रयोदशी ।
अथवाऽऽदौ प्रभूताद्या [1]आदित्याद्यास्ततः परम् ॥

सोमभास्करदीप्ताद्या मार्तण्डाद्या धरादयः ।
ब्राह्म्याद्या असिताङ्गाद्या इन्द्राद्यैर्दशमावृतिः ॥

दिग्विदिग्भेदतो भिन्ना अरुणाद्यास्ततः परम् ।
मित्राद्यावृतिरन्त्येति द्वादशावरणक्रमः ॥

प्राथमिकपञ्चदशावरणपक्ष एव ऐरावतान्तं पूजने सप्तावरणानि । भास्करान्तं पूजने त्रीणि । रविदलमात्रे यन्त्रे मध्ये सूर्यं दलेषु मित्रादीन् । दण्डं पिङ्गलं चोभयोः पार्श्वयोररुण-सारथिं पुरतः, इति एकावरणपक्षः ।

वस्तुतस्तु, पूर्वोक्तेषु सप्तविधेषु यन्त्रेषु पञ्चमषष्ठयोरेकावरणपक्षः, चतुर्थे त्र्यावरणीपक्षः, प्रथमे सप्तावरणी, द्वितीयसप्तमयोर्द्वादशावरणी, तृतीये पञ्चदशावरणी ।

प्रथमद्वितीययन्त्रयोस्तत्रानुक्तमपि मध्ये बिन्दुलेखनमावश्यकम् । तेन सहैवावरण-सङ्ख्यापूर्तेः । सप्तमयन्त्रे अष्टपत्रपद्मे येषां मते केसरलेखस्तेषां मते भूपुररेखात्रयस्य गणनया पञ्चदशावरणी पूजनीयेति ज्ञेयम् ।

**अस्माभिस्तु**, बहुजनाचारमनुरुध्य चतुर्थयन्त्र एव पञ्चादशावरणी कथिता, इति ज्ञेयम् ।

एषामन्यतमं पक्षमाश्रित्य रविमर्चयेत् । श्रमतारतम्ये फलतारतम्यं न्यायसिद्धमेवेति दिक् ॥

**॥ इत्यावरणपूजा ॥**

अत्र वा षडङ्गशक्तिपूजा कार्या ॥

अथ धूपः ।

"नासाक्षिरन्ध्रसुखद स धूपोऽतिमनोहरः ।
दह्यमानस्य काष्ठस्य पवित्रस्येतरस्य वा ॥

---

1 'आधाराद्या' इति पाठोऽन्यपुस्तके ।

परागस्याथ वा धूपो निस्तापो यस्य जायते ।
स धूप इति विज्ञेयो देवानां प्रीतिदायकः ॥
"निर्यासश्च परागश्च काष्ठं गन्धं तथैव च ।
कृत्रिमश्चेति पञ्चैते धूपाः प्रीतिकराः स्मृताः ॥"
"न यक्षधूपं वितरेन्माधवाय कदाचन ।
न रक्तबिन्दुकं शम्भौ सुरथं स्कन्दिनं तथा ।
मेदो मज्जावसायुक्तान् न धूपान् विनियोजयेत् ।
परकीयांस्तथाऽऽघ्रातान् स्तेयीकृत्याभिमर्दितान् ॥"
न भूमौ वितरेद्धूपं न पीठे नासने तथा ।
यथातथाऽऽधारगतं कृत्वा तद्विनिवेदयेत् ॥
राशीकृतैः सुगन्धाद्यैर्द्रव्यैरेकत्र धूपयेत् ।
तुषाग्निवत्तथा कृत्वा न तत्फलमवाप्नुयात् ।

कुरुन्दकधूपः सूर्यप्रिय इत्याहुः ।

"सघृतं गुग्गुलं वापि रवेर्भक्तिसमन्वितः ।
दद्यादभिमुखं सर्वम् अर्चने भक्तिमान्नरः ।
तत्क्षणात्सर्वपापेभ्यो मुच्यते नात्र संशयः ॥
श्रीवासं देवदारुं च सर्जरसं तथैव च ।
कर्पूरागुरुधूपानां दातारः स्वर्गगामिनः ॥ इति **ब्रह्मपुराणात्** ।

अन्येऽपि धूपाः प्रिया एव । गन्धर्वदैवत्याय धूपाय नमः इति पूजा । अत्र घण्टामपि सुरभिमुद्रया वं इत्यमृतीकृत्य "जगद्ध्वनिमन्त्रमातः स्वाहा" इति सम्पूज्य वामकरेण नादयन् धूपदीपौ दक्षिणहस्तेन प्रदर्शयेत् । अयं च धूपः पादाभिमुखेन प्रदर्शनीयः । सोऽपि च देवस्य पुरतो वामतो वा, न देवदक्षिणे । 'अत्र धूरसि' इति मन्त्रं पूर्वोक्तमन्त्रसमुच्चयेन **केचित्** पठन्ति ।

**॥ इति धूपः ॥**

दीपस्तु वर्तिकापात्रस्नेहभेदादनेकधा ।
तैजसं दारवं लोहं मार्तिकं नारिकेलजम् ।
तृणराजोद्भवं वाऽपि दीपपात्रं प्रशस्यते ॥

तृणराजस्तालः । तृणराजाह्वयस्ताल **इत्यमरात्** । यद्यपि

"गुवाकतालहिन्तालास्ताडीकः केतकी तथा ।
खर्जूरो नारिकेलश्च सप्तैते तृणराजकाः ॥

इति सप्तविधस्तृणराजस्तथापि प्रकृते नारिकेलस्य पृथग्ग्रहणात्ताल एव विवक्षित इति **केचित्** । गोबलीवर्दन्यायेनापि पृथग्ग्रहणोपपत्तेः । सप्तापि ग्राह्या इत्यन्ये ।

अस्थिपात्रेऽथवा भग्ने दुर्गन्धाद्युपवासिनि ।
पात्रे न दीपो दातव्यो विबुधैः श्रीविवृद्धये ॥

पद्मसूत्रभवा दर्भगर्भसूत्रभवा तथा ।
शाणजा बादरा वापि फलकोशोद्भवा तथा ॥

वर्तिका दीपकृत्येषु सदा पञ्चविधाः स्मृताः ।
शाणं वा बादरं वस्त्रं जीर्णं मलिनमेव वा ॥

उपयुक्तं न दद्यात्तु वर्तिकासु तु साधकः ।
घृतं च तिलतैलं च सार्षपं फलसम्भवम् ॥
राजिकोत्थं च दधि वा कार्पूरं माक्षिकं, च वा ।

इत्यष्टविधः स्नेहः । मधूकतैलं फलसम्भवं, राजिकाः सूक्ष्माः सर्षपाः स्थूलाः इति भेदः । माक्षिकं तु **बहवो** नेच्छन्ति । अत्राष्टविधानामपि स्नेहानां न तुल्यकल्पो विकल्पः । "हविर्भिः प्रथमः कल्पो द्वितीयस्त्वौषधीरसः" इति **ब्राह्मात्** ।

न मिश्रीकृत्य दद्यात्तु दीपस्नेहान् कदाचन ।
वसामज्जाऽस्थिनिर्यासस्नेहैर्दीपं न दीपयेत् ॥

दीपवृक्षास्तु कर्तव्यास्तैजसा वाऽपि काष्ठजाः ।
वृक्षेषु दीपा दातव्या न तु भूमौ कदाचन ॥

दीपवृक्षाः ठाणवई, समई, इति भाषया प्रसिद्धाः ।

सर्वंसहा वसुमती सहते न त्विदं द्वयम् ।
अनार्यचरणाघातं दीपतापं तथैव च ॥

अकार्येति क्वचित्पाठः ।

कुर्वन्तं पृथिवीतापं यो मोहाद्दीपमुत्सृजेत् ।
सोऽतिशिष्टोऽपि नरकं प्राप्नोत्येव शतं समाः ॥

लभ्यते यस्य दीपस्य तापो वै चतुरङ्गुलात् ।
न स दीप इति प्रोक्तो मोघवह्निस्तु स स्मृतः ॥

तस्मात् दीपवृक्षस्थिते पात्रे शुद्धस्नेहप्रपूरिते ।
नेत्राह्लादकरः स्वल्पो भूमितापविवर्जितः ॥

सशिखः शब्दरहितो निर्धूमो नातिह्रस्वकः।
दक्षिणावर्तवर्तिस्तु दीप उत्तम ईरितः॥
वृक्षेण रहितो दीपो मध्यमः परिकीर्तितः।
विहीनः पात्रतैलाभ्यां अधमः परिकीर्तितः॥
नैव निर्वापयेद्दीपं न हरेदन्यतोऽपि वा।
दीपहर्ता भवेदन्धः काणो निर्वापको भवेत्॥
उद्दीप्तदीपप्रतिमं काष्ठं धूमविवर्जितम्।
दीपालाभे निवेद्यं स्यादुल्मुकं तु कदाचन॥
उल्मुकं नैव दीपार्थे कदाचिदपि चोत्सृजेत्।
प्रसन्नार्घ्यं तदा दद्यादुपचाराद्बहिष्कृतम॥

इत्यादि **कालिकापुराणे** देवतासामान्योद्देशेन विधिः। सूर्यमेवोद्दिश्य तु **ब्रह्मपुराणे** सूर्यं प्रस्तुत्य

"घृतेन दीपं प्रज्ज्वाल्य तिलतैलेन वा पुनः।
दीर्घायुर्वपुषा युक्तश्चक्षुषा न च हीयते॥
दीपदानपरो नित्यं ज्ञानदीपेन दीप्यते।
स्पष्टबुद्धीन्द्रियश्चापि संसारात्सुविमुच्यते॥
भवत्यूर्ध्वगतिर्दीपो न कदाचिदधोगतिः॥
दाता दीप्यति चाप्येवं न तिर्यग्गतिमाप्नुयात्॥" इत्यादि।

विष्णुदैवत्याय दीपाय नमः इति पूजा। अथ दीपो देवदृष्टिसमानोर्ध्वः, सोऽपि च देवस्य पुरतो दक्षिणतो वा। न वामतः। उद्दीप्यस्वेति मन्त्रमत्र समुच्चिन्वन्ति **परे।**

वस्तुतस्तु, धूपदीपयोः प्रदर्शनमाभिमुख्येनैव कार्यम्। "नापसव्यं च सव्यं च दद्यादभिमुखं सदा। इति धूपदीपप्रकरणयोर्मध्ये **ब्रह्मपुराणे** विधानात्। तस्य च काकाक्षिन्यायेन उभयोरन्वयात्। दक्षिणवामभागनिषेधस्तु प्रदर्शनोत्तरं तत्पात्रस्थापनपरः।

॥ **इति दीपः** ॥

निवेदनीयं यद्द्रव्यं प्रशस्तं प्रयतं तथा।
तद्भक्ताद्यं पञ्चविधं नैवेद्यमिति गद्यते।
भक्ष्यं भोज्यं च लेह्यं च पेयं चोष्यं च पञ्चमम्॥
सौवर्णे राजते वापि ताम्रे वा प्रस्तरोद्भवे।
पद्मपत्रेऽथवा दद्यान्नैवेद्यं देवताप्रियम्॥

अत्र परमान्नप्रियः सूर्यो गणेशो लड्डुकप्रियः। इत्यादि तत्तद्देवताप्रियपदार्थानामावश्यकतार्थमेषोक्तिर्नेतरपरिसङ्ख्यापरा। पायसैरपूपैरिति वक्ष्यमाणवचनात्।

यज्ञदारुमयं वाऽपि पात्रं मध्यममिष्यते ।
सर्वाभावे तु माहेयं स्वहस्तघटितं यदि ॥

माहेयं मार्तिकम् ।

"नैवेद्यं दक्षिणे वामे पुरतो वा न पृष्ठतः ।

तत्र देवस्य पुरतो वामादौ वा मण्डलं निर्माय नानाविधान्नं प्रोक्षणेन परिशोध्य अग्निबीजेन दग्धदोषं विभाव्य पीयूषबीजेन वामकरेण स्पृष्ट्वा, मूलेनाष्टवारं दक्षिणेन च स्पृष्ट्वा अष्टधा जप्त्वा सुरभिमुद्रामममृतेश्वरीमन्त्रेण प्रदर्श्य विष्णुदैवत्याय नैवेद्याय नमः इति सम्पूज्य, उद्धृतपुष्पहस्तः स्वाहान्तमूलेन देवस्य वदनात्तेज आनीय नैवेद्ये क्षिप्त्वा पुनर्जलं दत्त्वा तदमृतात्मकं हविरभ्यर्च्य, अञ्जलिं सगन्धाक्षतकुसुमं बद्ध्वा—

"निवेदयामि भवते जुषाणेदं हवी रवे ।"

इति जपन् पुष्पेणाराध्य पश्चान्निवेदयेत् । ततोऽमृतापोशनं समन्त्रकं दत्त्वा वामहस्तेन ग्रासमुद्रां दक्षहस्तेन प्राणादिमुद्राश्च दर्शयन् प्राणादिमन्त्रान् पठेत् । ततो नैवेद्यमुद्रया 'नैवेद्यं समर्पये' इति वदेत् । अत्र "प्रणवो व्याहृतयो मूलं व्याहृतयः प्रणव" इति मन्त्रेण अष्टोत्तरं सहस्रं शतं वा होमं, अग्निमुखपूर्वकं **केचिदिच्छन्ति** । पानीयमिदं समर्पयामीति जलममृतीकृतं दत्त्वा, देवतामुखोद्गतं तेजः परावर्त्य यथास्थानं संयोज्य उत्तरापोशनं समन्त्रकं दत्त्वा नैवेद्य-मुत्तरतो निधाय, किञ्चित् 'शेषभुग्भ्यो नमः' इति दत्त्वा गण्डूषान् दन्तधावनं जिह्वोल्लेखनं पुनर्गण्डूषान् हस्तप्रक्षालनं पाद्यमाचमनीयं मुखप्रोञ्छनं मुखवासं च समर्पयेत् । तत्तद्देवतावाचक-पदं चतुर्थ्यन्तं गण्डूषादिपदं द्वितीयान्तं इदं शब्दश्च तादृशः समर्पयामि पदं नमः पदं चेति मन्त्राः । पाद्याचमनीयपात्रे तु निःशेषं विनियोज्ये । मुखवासो नाम एलाजीरकगुडादिभक्ष्यरूपः । "ऐं अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावयं ह्रीं जूं सः स्वाहा" इत्यमृतेश्वरी-मन्त्रः । एतत्फलं **ब्रह्मपुराणे**—

कृसरैः पायसैः पूपैः फलमूलसितोदनैः ।
बलिं दत्त्वाऽथ सूर्याय सर्वान् कामानवाप्नुयात् ॥
यद्यद्द्रव्यं नरो भक्त्या आदित्याय प्रयच्छति ।
तत्तत्फलमवाप्नोति शतसाहस्रसङ्ख्यया" इत्यादि ।

**॥ इति नैवेद्यः ॥**

पर्णानि मगधदेशोद्भवानि पक्वानि अन्यानि वा, दक्षिणदेशोद्भवाः क्रमुकाः सुगन्धि-खदिरो प्राण्यङ्गजं चूर्णं कर्पूरनागरैलालवंगकेसरजातीपत्रफलनारिकेलशकलमरीचादिकं चेति यथायोग्यं मिलितं पर्णादिचतुष्टयमेव वा ताम्बूलपदवाच्यम् ।

**॥ इति ताम्बूलम् ॥**

ततः श्रीसूर्याय प्रसन्नार्घ्यं समर्पयामीति पात्रान्तरेणार्घ्यं दत्त्वा गन्धाद्युपचारचतुष्टयेन पुनः पूजयेत् । इयमेव प्रसन्नपूजा **तन्त्रराजे** अर्चनापदेन व्यवहृतेति वदन्ति ।

॥ इत्यर्चना ॥

ततः पुष्पाञ्जलिं दत्त्वा स्तुवीत

कूपाकूपारकुल्यास्त्वथ च नदनदीखेयकासारवापी-
ष्वापातालं प्रविष्टैर्दशशतगुणितै रश्मिभिर्वारि भूरि ।
ग्राहं ग्राहं निषिञ्चन् सुखयसि तृषितान् पादपान् पादहीनान्
एषा ते दानधाटी निरुपधिकरुणा वेति, भानो न विद्मः ॥

इति **मामकीनः** स्तवः ।

अत्र **सूर्यप्रोक्त** एकविंशतिनामाख्यस्तवः, उपक्रमफलश्रुत्यादिविमोकेन लिख्यते ।

विकर्तनो विवस्वांश्च मार्तण्डो भास्करो रविः ।
लोकप्रकाशकः श्रीमान् लोकचक्षुर्ग्रहेश्वरः ॥
लोकसाक्षी त्रिलोकेशः कर्ता हर्ता तमिस्रहा ।
तपनः पावकश्चैव शुचिः सप्ताश्ववाहनः ।
गभस्तिहस्तो ब्रह्मण्यः सर्वदेवनमस्कृतः ॥

इत्यतिरहस्यरूपः स्तवः । सत्यवकाशे आदित्यहृदयादिकं पठेत् ॥

॥ इति स्तोत्रम् ॥

तर्पणं तु देव्यैकविषयं वदन्ति । वस्तुतस्तु, **ब्रह्मपुराणे**, सूर्यं प्रस्तुत्य,

"घृतेन तर्पणं कृत्वा सर्वस्निग्धो भवेन्नरः ।
क्षीरेण तर्पणं कृत्वा मनस्तापैर्न युज्यते ।
दध्ना तु तर्पणं कृत्वा कार्यसिद्धिं लभेन्नरः ॥"

इति गुणफलसन्नद्धविधानदर्शनात् "गणेशस्तर्पणप्रिय" इति वचनात्, देवतान्तरेऽप्यस्त्येव। एवं दीपोत्तरमञ्जनं **कालिकापुराणे** कथितम् । तदपि पुंदैवत्येऽपि **केचिदिच्छन्ति**। नीराजने दीपधर्माणामेवातिदेशः । परं तु देवताऽभिमुख्येन नववारं भ्रामणमिति विशेषः । **तन्त्रान्तरे** तु देवतायाश्चरणयोरग्रे चतुर्वारं ततो नाभौ द्विवारं मुखे सकृत् सर्वाङ्गे सप्तवारं इत्येवं चतुर्दशवारं भ्रामयेत् इत्युक्तम् । अयं च विशेषो देवीमात्रविषयक इत्यप्याहुः ।

उपवीतमक्षताः फलं नीराजनं दक्षिणा चेत्युपचाराः प्रसिद्धतरा एव ।

अथ प्रदक्षिणा ।

"प्रसार्य दक्षिणं हस्तं स्वयं नम्रशिराः पुनः ।
दर्शयन् दक्षिणं पार्श्वं मनसाऽपि च दक्षिणः ॥
सकृत् त्रिर्वाऽऽवेष्टयेद्यत् तत्प्रदक्षिणमुच्यते ।"
"शिवं प्रदक्षिणीकुर्वन् सोमसूत्रं न लङ्घयेत् ॥" इति **वचनान्तरात्** ।
"एका चण्ड्या रवेः सप्त तिस्रो दद्याद्विनायके ।
चतस्रो विष्णवे देयाः शिवस्यार्धं प्रदक्षिणम् ॥

अर्धं सोमसूत्रान्तमित्यर्थः । एतत्फलं **ब्रह्मपुराणे**—

"भुक्तिमुक्तिप्रदं योऽसौ रवेः कुर्यात्प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥
सूर्यं मनसि यः कृत्वा कुर्याद्व्योमप्रदक्षिणाम् ।
प्रदक्षिणीकृतास्तेन सप्तद्वीपा भवन्ति हि ॥

व्योमप्रदक्षिणा तु व्योमन्येव सूर्यपूजनपक्षे ।

"अग्नौ तोयेऽन्तरिक्षे वा शुचौ भूम्यां तथैव च ।
प्रतिमायां तथा पिण्ड्यां देयमर्घ्यं०"

इति **ब्रह्मपुराणे** व्योमन्यपि पूजनोक्तेः ।

नमस्कारप्रकारस्त्वग्रे वक्ष्यते । छत्रचामरतौर्यत्रिकादिराजोपचारान्, असम्भवे जलादिना वा समर्पयेत् ।

ततो ब्रह्मार्पणमन्त्रेण चुलुकोदकेन आत्मानमर्पयेत् । निर्माल्यं च स्वीकुर्यात् । यत्तु, **ब्रह्मपुराणे**--

"ब्रह्माङ्गलग्नं विप्रेभ्यो वैष्णवं च प्रदापयेत् ।
रुद्राङ्गलग्नमग्नौ च दहेत्सर्वं च तत्क्षणात् ॥
अन्येभ्यो यच्च देवेभ्यो दत्तं दीनेषु तत् क्षिपेत् ।
पित्रेभ्यस्त्वथ यद्दत्तं मातृभ्यो यन्निवेदितम् ।
ब्राह्मणेभ्यस्तु तद्देयं गणेशादिनिवेदितम् ॥"

इति वचनात्, सौरनिर्माल्यं दीनेभ्यो विप्रेभ्यो वा देयमित्यापाततः प्रतीयते तत्तु "**तीर्थस्य** ग्रहणं कुर्यान्मन्त्रेणानेन साधकः" इत्यादि **भविष्योत्तरपुराण**वचनात् एतदन्यविषयकम् ।

'ॐ इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्-स्वप्नसुषुप्तिष्ववस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यदुक्तं यत्स्मृतं यत्कृतं तत्सर्वं श्रीसूर्याय समर्पितमस्तु

स्वाहा, मां मदीयञ्च सकलं श्रीसूर्याय समर्पये' इति ब्रह्मार्पणमन्त्रश्चुलुकोदकमन्त्र इति च व्यपदिश्यते ।

॥ इति उपचारनिर्णयः ॥

ततः पीठादैशान्यां गोमयेन चन्दनेन वा मण्डलं निर्माय तत्र । ॐ माठराय नमः माठरमावाहयामि स्थापयामि पूजयामि नमः, इति मन्त्रैर्माठरपिङ्गलदण्डान् परिचारकांश्च षोडशादिभिरुपचारैः प्रधानदेवताशिष्टैरेव गन्धादिद्रव्यैरभ्यर्च्य नैवेद्याच्छतांशं सजलं निवेद्य ।

"मन्त्रहीनं क्रियाहीनं भक्तिहीनं च यन्मया ।
कृतं त्वराश्रितं कर्म कृपया तत्प्रपूरय ॥"

इति प्रार्थ्य प्रणमेत् ।

॥ इति परिचारकपूजा ॥

ततः सूर्यगायत्रीं द्वादशवारं जपेत् ।

"भास्कराय विद्महे, महद्द्युतिकराय धीमहि ।
तन्न आदित्यः प्रचोदयात्" इति ।

ततः—

विनतातनयो देवः सर्वसाक्षी सुरेश्वरः ।
सप्ताश्वः सप्तरज्जुश्च अरुणो मे प्रसीदतु ॥

अरुणपदं ङे नमोऽन्तं इदमर्घ्यं समर्पयामीति मन्त्रेण प्रसन्नार्घ्यपात्रगतं जलं पात्रान्तरे अरुणोद्देशेन सर्वं त्यजेत् । सप्ताश्वरज्जुसंयुक्त इति तृतीयचरणः क्वचित्पठ्यते । ततस्तेनैव प्रसन्नार्घ्यपात्रेण विशेषार्घ्यपात्रस्थं जलं किञ्चिदानीय 'एहि सूर्येति यथालिङ्गमुक्त्वा श्रीसूर्याय साङ्गोपाङ्गाय सपरिवारायेदमर्घ्यं समर्पयामि' इति विसृजेत् । पुनस्तथैव गृहीत्वा

"जगन्नेत्र जगन्नाथ जगतः कारणाव्यय ।
तमोहर नमस्तुभ्यं गृहाणार्घ्यं नमोऽस्तु ते ॥"

इत्यन्ते श्रीसूर्यायेत्युक्त्वा दद्यात् । अत्र 'तमोहर नमस्तेऽस्तु प्रसीद परमेश्वर' इति तन्त्रान्तरस्थो मन्त्रोत्तरार्धो विलक्षणः । सोऽपि विकल्पेनेह योज्यः । एहि सूर्येति मन्त्रस्य आवाहनादावसाधारणलिङ्गके कार्यान्तरे तस्य विनियोगादर्शनात् ।

ततो विशेषार्घ्यमेवोच्चाल्य शिरसाऽभिनम्य ।

ॐ घृणिः सूर्य आदित्यो न प्रभावात्यक्षरम् मधु क्षरन्ति तद्रसम् ।
सत्यं वै तद्रसमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम् ॥

श्रीसूर्याय: नमः, इत्येतावदेवोक्त्वा इदमर्घ्यं समर्पयामि' इति सूर्याग्रे दत्त्वा, पुनः **प्रणमेत्** । अत्रेदमिति पदस्थाने एतमिति पुल्लिङ्गं **केचित्** पठन्ति । **अन्ये** तु समर्पयामीति पदं परित्यज्य एषोऽर्घ्य इत्येव वदन्ति । इदमर्घ्यं न ममेति तु **साम्प्रदायिकाः** । तत्र यथासम्प्रदायं व्यवस्था । एवमग्रेऽपि **मतचतुष्टयी** ।

ततः स्तोत्रैरुपस्थानं नमनमात्मदेवतैक्यचिन्तनं च कार्यमिति **केचित्** । **परे** त्वरुणार्घ्यविशेषार्घ्ये एव तन्वते नान्ये । **अन्ये** तु मन्यन्ते, परिचारकपूजादिकमेतदन्तं **कर्म कृताकृतमिति** च पूजासङ्क्षेपो नित्यपूजास्वेव न काम्यनैमित्तिकयोः । तत्रैव

"नित्यपूजासु तु पुनः सम्पूर्णं यदि शक्यते ।
कल्पोदितं पूजयितुं तदा कुर्यादतन्द्रितः ॥
न चेद्विस्तरशः कर्तुं देव्याः पूजां तु भैरव ।
कल्पोक्तं वाऽन्यदेवस्य तत्रायं विधिरुच्यते ॥'

इत्युपक्रम्य सङ्क्षेपोक्तेः ।

## ॥ इति श्रीभास्करोन्नीते तृचभास्करे पूजाविधिः ॥

## अथ अर्घ्यदानविधिः ।

ततः करशुद्धिन्यासः कार्यः । **अर्घ्यदानारम्भे** तदावश्यकताया विशेषन्यासारम्भ एवोक्तत्वात् ।

अथ विस्तृतपूजास्वशक्तस्य संक्षिप्तपूजोक्ता **कालिकापुराणे**—

मार्जनैस्तु सुसंस्कृत्य स्थण्डिले मण्डलं लिखेत् ।
पात्रस्य प्रतिपत्तिं तु कृत्वा दाहं प्लवं तथा ।
ध्यायेदात्मानमथ च संस्कृत्याऽभेदभावनैः ॥
अङ्गुष्ठावस्त्रपर्यन्तं द्वादशाङ्गं हि विन्यसेत् ।
आधारशक्तिप्रमुखान् पीठदेवान् प्रपूज्य च ॥
हृदिस्थां देवतां ध्यात्वा बहिष्कृत्य च वायुना ।
आरोप्य मण्डलं दद्यादुपचारान् यथोचितान् ॥
पूजयित्वा षडङ्गानि तथाऽष्टौ दलदेवताः ।
पुष्पाञ्जलित्रयं दत्त्वा जप्त्वा स्तुत्वा प्रणम्य च ॥
मुद्रामग्रे प्रदर्श्याथ पश्चाद्देवं विसर्जयेत् ।
सर्वेषामेव देवानामेष एव विधिः स्मृतः ॥ इति ।

प्रतिपत्तिः पात्रस्थापनम् । दाहः पूर्वो नाम भूतशुद्धिरेव । अथ ।

" संपूज्यैवं विधिना विधिवद्गोरोचनादिभिर्द्रव्यैः ।
दद्यादर्घ्यं रवये मन्त्री निजवाञ्छिताप्तये मुक्त्यै ॥ "

कलशजलेन विशेषार्घ्यपात्रमापूर्य तत्र गोरोचनादि क्षिपेत् । प्रतिपात्रं मागधप्रस्थ-परिमितं जलं मध्ये ग्राह्यम् । तल्लक्षणं तु, **दानकाण्डे**—

" पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम् ।
चतुर्भिः कुडवैः प्रस्थ आढकस्तैश्चतुर्गुणैः ॥
चतुर्भिस्तैर्भवेद्द्रोण इत्येतद्द्रवमानकम् ॥ " इति ।

**अन्यत्रापि** ।

" दशार्धगुञ्जं प्रवदन्ति माषं माषैस्तथा षोडशभिश्च कर्षम् ।
कर्षैश्चतुर्भिश्च पलं प्रदिष्टं प्रस्थः पलैः षोडशभिः प्रदिष्टः ॥ " इति ।

**वैद्यकतन्त्रे**ऽपि त्रिंशद्भिः परमाणुभिस्त्रसरेणुरष्टोत्तरशतत्रसरेणुभिर्माषमुक्त्वा
माषोर्धरङ्को धरणः...कोलः पलम् ।
प्रसृतिः कुडवो मानी प्रस्थोऽर्धाढकमाढकम् ।
घण्टार्धद्रोणकः शूर्पो द्रोण्युद्धारश्च खारिका ।

इत्यष्टादश पदार्थाः पूर्वपूर्वं द्विगुणा उक्ताः । **अन्यत्रापि** " खारा चतुर्भिः साहस्रैः षण्णवत्यधिकैः पलैः " इति । **ग्रन्थान्तरे**

" माषटङ्काक्षबिल्वानि कुडवः प्रस्थमाढकम् ।
राशिगोणी खारिकेति यथोत्तरचतुर्गुणाः ॥ "

इति । बिल्वमत्र पलपर्यायः । " प्रकुञ्चं षोडशा मुष्टिराम्रं बिल्वं पलं मतम् " इति **कोशात्** । यत्तु **सङ्ग्रहे**—

" लाजा पायसनारिकेलसलिले मूत्रे जले काञ्जिके
द्वात्रिंशत्पलिका पलैर्द्धृतिमितैः प्रस्थो गुडं सम्मतः ।
तैलक्षौद्रघृतेषु विंशतिपलैर्दध्नस्तु पञ्चोत्तरैः
प्रस्थः क्षीर ँ नो बुधैर्निगदितस्त्रिंशत्पलैरेव तु " ॥ इति

तत्कलिङ्गभाषापरतया कपालावयवस्थकपालिकपालिकेति व्यवहारदर्शनात् । कपालिकापदस्य पलार्धपरतया वा नेयम् । उक्तविरोधात् । तदिदं पलं लौकिकमानेन ढबुकद्वयं भवति, इत्याहुः । तेन द्वात्रिंशत् ढबुकमितं जलमर्घ्यग्राह्यमिति सिद्धम् ।

गोरोचनादीन्युच्यन्ते ।

" गोरोचनास्रतिलवैणवराजिरक्तशीताख्यशालिकरवीरजपाकुशाग्रान् ।
श्यामाकतण्डुलयवांश्च यथाप्रभावात्संयोज्य भक्तिभरतोऽर्घ्यविधिर्विधेयः ॥ "

अस्रं कुङ्कुमम्। वैणवास्तण्डुलाः इति शेषः। रक्तं रक्तचन्दनम्। शीताख्यं कर्पूरम्, एतदभावे रक्तचन्दनरक्तपुष्परक्ततण्डुलदूर्वायवतिलांस्तिलरहितान् वा, क्षिपेत्। न च काम्ये प्रतिनिधिर्नास्तीति षाष्ठन्यायविरोधः। वाचनिकत्वेन तदभावात्। तदेवोपासकान् आजन्मार्घ्यदानसङ्कल्पशालिनश्च प्रति अस्य नित्यत्वाद्वा। "पुष्पमेकं तण्डुलाश्च दश षड्वा०" "अक्षतान् दश वा षड्वा०" "पुष्पमेकं च दूर्वया०" इति **वचनात्।**

अत्र प्रतिप्रक्षेपं कमलसाहित्यपक्षे अङ्गुष्ठानामिकाभ्यां तस्य पात्रे निक्षेपः। "अङ्गुष्ठोपकनिष्ठाभ्यां शतपत्रं विनिक्षिपेत्" इत्येव पाठो, न पुनः शतपत्रमिति, तदाऽक्षतपुष्पादिष्वेवैषा मुद्रा अन्वेति।

अयं च तण्डुलादिविनिक्षेप उष्ट्रासिकयोपविश्य कार्यः—

"निषीदति यथा भूमौ पूर्वजानु क्रमेलकः।
पादाग्रे पश्चिमस्थाने गुल्फस्थस्तु यथाक्रमम्॥"
"उष्ट्रासिकाख्यमुपवेशनं सौरार्घ्यकर्मणि।"

इति **वचनात्। प्रयोगकारै**रुपवेशनोत्तरमेव द्रव्यनिक्षेपकथनात्।

**ग्रन्थान्तरे** त्वेव जपाकरवीरातिरिक्तं कुसुमान्तरं कमलं रक्तमरक्तं वा दूर्वा चेति सम्मेल्य षोडशपदार्था निक्षेपणीयत्वेन कथिताः। तेन तदभावे त्रयोदशेति ज्ञेयाः। अत्रैव यवान् निरस्य कुसुमान्तरं सम्मेल्य वा त्रयोदश। तिलयवयोः कुसुमतिलयोर्वा त्यागादेकादश वा। रक्तचन्दनरक्तपुष्परक्ततण्डुलतिलयवदूर्वाः षड् वा। एत एव तिलरहिताः पञ्च वा। तिलतण्डुलकुशाग्रगन्धरक्तचन्दनानि वा पञ्च। तिलरहितानि कुशरहितानि वा चत्वारि। उभयरहितानि त्रीणि वा। रक्तचन्दनं रक्ताक्षता इति द्वयमेव वा। रक्ताक्षतामात्रं वा। इति द्वादशसु पक्षेषु शक्तितः कञ्चन पक्षमवलम्ब्य पदार्थानर्घ्यपात्रे

"उपमौलि समादाय तत्पात्रं नान्यदिङ्मनाः।
प्रतिपात्रं नमस्कुर्यात् दृष्ट्वा दृष्ट्वा दिवाकरम्॥
धृत्वा शिरसि तत्पात्रं नासाग्रमवलोकयन्।
मन्त्रमुच्चार्य विधिवद् दद्यादर्घ्यं समाहितः॥"

यद्यपि **भविष्ये** "धृत्वा शिरसि तत्पात्रं जानुभ्यां धरणिं गतः।" इत्येवोक्तं तथाऽपि तस्योपसंहारन्यायेन उष्ट्रासिकायामेव तात्पर्यम्। अशक्तिपरत्वेन वा व्यवस्था।

## ॥ इति अर्घ्येतिकर्तव्यता ॥

मन्त्रास्तावत् तृचमात्रग्रथिताः पौराणिकमिश्रिताः अन्यविधाश्चेति द्विविधाः। तत्र केवलतृचमन्त्रास्तु ग्रन्थभेदेनाचारभेदेन च नानाविधा उपलभ्यन्ते। तथा हि आदौ प्रणवस्ततो

लज्जाबीजानि षड्दीर्घरूपाणि ततस्तृचस्यैकैकः पादः मित्राद्येकैकं नाम ङे नमोऽन्तं तत इदमर्घ्यं समर्पयामीति । एवं द्वादशभिः पादैर्द्वादश मन्त्राः । यथा—

"ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः उद्यन्नद्य मित्रमहः मित्राय नमः इदमर्घ्यं समर्पयामि।" इति। अत्र मित्रादित्यार्कपदैः सह प्रथमनवमैकादशानां न सन्धिभिरुत्वलोपडमुडागमाः कार्याः, इति सम्प्रदायः । वाक्ये संहितायाः वैवक्षिकत्वेन नानुशासनविरोधः । अत एव नाम्नां मिथो योजने द्वन्द्वसमासत्वादादित्यर्कपादाभ्यां सह मरीचिसवितृपदयोर्यण् विधेयः । ततोऽस्मिन्नेव सन्निवेशे पादस्थाने एकैकोऽर्धर्चः । ततो द्वे द्वे नामनीति षण्मन्त्राः । ततस्तत्रैव एका ऋक् चत्वारि चत्वारि नामानीति त्रयो मन्त्राः । ततोऽत्रैव तृचं सम्पूर्णं द्वादशनामानीत्येको मन्त्रः । अयं च समष्टिमन्त्र इत्युच्यते । संहत्य द्वाविंशतिमन्त्राः । **इत्येकः पक्षः ।**

अत्रैव पादादिकोत्तरं पुनः प्रणवपूर्वकं षड्दीर्घप्रयोगस्ततो नामादिकमिति । यथा—

ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः उद्यन्नद्य मित्रमहः ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः मित्राय नमः इदमर्घ्यं समर्पयामि इति **द्वितीयः पक्षः** । अत्रैवोत्तरषड्दीर्घेभ्यः परत एव प्रणवयोगो न तेभ्यः पूर्वमिति **केचित्** । अस्मिन् पक्षे परतः षड्दीर्घाणां व्युत्क्रमेण प्रयोगो युक्ततरो भाति । यथा—

ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः उद्यन्नद्य मित्रमहः ह्रः ह्रौं ह्रैं ह्रूं ह्रीं ह्रां ॐ मित्राय नमः इदमर्घ्यं समर्पयामीति **तृतीयः पक्षः ।** अनयोरेव द्वितीयतृतीयपक्षयोः उत्तरौ बीजसन्निवेशौ समर्पयामि पदोत्तरं **केचन** प्रक्षिपन्तीति **द्वौ पक्षौ** । एवं **पञ्चपक्षाः ।**

अथवा, आदौ प्रणवः ततः एकैको दीर्घ एकैकपाद एकैकं नामेत्यादि । यथा । ॐ ह्रां उद्यन्नद्य मित्रमहः मित्राय नमः । ॐ ह्रीं आरोहन्नुत्तरां दिवं रवये नमः इत्यादि । सप्तमादि द्वादशान्तेषु पदेषु पुनरेत एव दीर्घाः । त्रयोदशादिषु त्रिषु तु द्वौ द्वौ दीर्घौ द्वौ द्वौ पादौ द्वे द्वे नामनी । षोडशादिषु त्रिषु पुनरेवमेव द्विद्विबीजनिवेशः । एकोनविंशादिषु तु त्रिषु, चत्वारि चत्वारि पदानि पादा नामानि च । तत्रापि विंशे पञ्चमषष्ठौ प्रथमद्वितीयौ चेति चत्वारो दीर्घाः। एकविंशे तु द्वितीयादयः । द्वाविंशे तु मन्त्रे षड्दीर्घाः दण्डकलितवद्द्विरावृत्ताः सम्पूर्णतृचमिति विशेषः । **इत्येकः पक्षः ।** अन्येऽपि चत्वारः पक्षाः पादाद्युत्तरं समर्पयाम्युत्तरं च प्रातिलोम्येनानुलोम्येन च पूर्वप्रक्षिप्तबीजानां पुनः प्रक्षेपेण सम्पुटीकरणरूपा ऊह्याः ।

एतेष्वेव दशसु पक्षेषु इदमर्घ्यमिति नपुंसकान्तस्य, इममर्घ्यं इति पुल्लिङ्गान्तस्य, एषोऽर्घ्य इति प्रथमान्तस्य वा अर्घ्यपदस्य प्रयोगेण इदमर्घ्यं न ममेति साम्प्रदायिकपक्षरीत्या प्रातिस्विकं चत्वारो भेदा इति चत्वारिंशत्पक्षाः ।

परं तु **साम्प्रदायिकपक्षे** यदि सर्वान्ते बीजप्रक्षेपस्तदा नमः पदोत्तरमेव स कार्यो न पुनर्न ममेत्यस्यानन्तरम्। न ममेत्यस्य त्यागाभिलापत्वेन नमः पदोत्तरमेव मन्त्रसमाप्तेर्वक्तव्यत्वात्। तथा च तत्पक्षे नमोऽन्तं चरमबीजान्तं वोच्चार्य जलं प्रक्षिप्य इदमर्घ्यं न ममेति त्यागवचनम्। तत्रापि मित्रायेदमर्घ्यं न ममेत्यादिरीत्या त्यागवचनं तु युक्तमुत्पश्यामः।

अर्घ्यवृद्धौ कोटिहोमादिष्विव त्यागप्रकारो बोध्यः। एवं कल्पितेषु पक्षेषु यथासम्प्रदायं व्यवस्था ज्ञातव्या। परं तु प्रथममन्त्रादि समष्टिमन्त्रान्तमेकैव विधा कार्या। न पुनस्तेष्वेव केचित् सम्पुटिताः केचिदसम्पुटिता इति पक्षसाङ्कर्यं कार्यम्।

एवं बहुभिर्ब्राह्मणैरेकोद्देशेन कुर्वाणैरेक एव पक्षोऽनुसर्तव्यः। ब्राह्मणभेदेन पक्षभेदोऽप्यनुष्ठातुं युक्त इति **केचित्**। तत्पक्षे दिवसभेदेनान्तत आवृत्तिभेदेन च पक्षसाङ्कर्यस्याप्यनुमतिस्तुल्यन्यायेनापद्यते। एकेनैव ब्राह्मणेन अद्य एकः पक्षः श्वोऽन्यः पक्षोऽनुष्ठेय इति एकस्मिन्नपि दिने प्रथमावृत्तिर्येन पक्षेणानुष्ठिता ततोऽन्येन पक्षेण तेनैव वा नियमेन द्वितीयाद्यावृत्तयोऽनुष्ठेया इति। अतः सम्प्रदाय एव शरणम्।

## ॥ इति अर्घ्यमन्त्राः ॥

एवं द्वाविंशतिभिर्मन्त्रैः स्वस्थानविवृद्धिन्यायेन त्रिगुणितैः षट्षष्टिः प्रक्षेपाश्चेदेकावृत्तिरुच्यते। इति मुख्यः पक्षः।

अत्राशक्तानां चरमस्य समष्टिमन्त्रमात्रस्यावृत्तिः। तावतैवैकविंशतीनां व्यष्टिमन्त्राणामप्यावृत्तप्रायत्वात्। अस्मिन् पक्षे चतुर्विंशतिभिः प्रक्षेपैरेकावृत्तिरित्यनुकल्पः। इत्थं च

"पादार्धर्चतृचैरेवं त्रिधाऽऽवृत्तैस्तृचादिना।
दद्यादर्घ्याणि मन्त्राणामानुलोम्यैर्विवस्वते।"

इति **भविष्योत्तरे** द्वाविंशतीनामपि त्रैगुण्येन सूचितस्य षट्षष्टिप्रक्षेपैरेकावृत्तिपक्षस्य, "चतुर्विंशत्यर्घ्यदानैरेकमावर्तनं मतम्" इति **शौनकोक्तपक्षस्य** च न मिथो विरोधः। द्विविधाऽप्यावृत्तिर्दण्डकलितवत् चतुर्विंशतिगुणिता चेदंश इत्युच्यते। एवं पूर्वपूर्वस्य चतुर्विंशतिगुणत्वे लघुः अर्घ्यो महार्घ्योऽत्यर्घ्य इति चत्वारोऽन्ये भेदा भवन्ति। न पुनर्मुख्यपक्षे अंशादीनामपि पूर्वपूर्वस्मात् षट्षष्टिगुणितत्वमिति भ्रमितव्यम्। "चतुर्विंशतिसङ्ख्याकैरर्घिण्यावर्तनैर्भवेत्" इति विधेरविशेषेणोभयत्रापि प्रवृत्तेः। उद्देश्यतावच्छेदकस्य विधेयव्याप्यत्वनियमात्। तथैव सम्प्रदायाच्च। अत्र त्वंशोऽर्घिणीति पर्यायः। अयमत्र सङ्ग्रहः।—

षट्षष्टिसङ्ख्यैः प्रक्षेपैरेकमावर्तनं मतम्।
चतुर्विंशतिभिर्वाऽपि क्षेपैरावृत्तिरुच्यते॥

आवर्तनैश्च तावद्भिरेकोंऽशः परिकीर्तितः ।
अंशैश्चतुर्विंशतिभिरेको लघुरितीरितः ॥
तावद्भिरेव लघुभिरेकोऽर्घ्य इति गद्यते ।
अर्घ्यैश्चतुर्विंशतिभिर्महार्घ्यः परिकीर्तितः ।
महार्घ्यैरपि तावद्भिरत्यर्घ्य इति कथ्यते ॥

**केचित्तु,** आवृत्त्याद्यत्यर्घ्यान्तषट्कस्य अर्घ्य आवर्तनमर्घिणी लघ्वर्घ्यो महार्घ्योऽत्यर्घ्य इति संज्ञा ईरयन्ति । **अन्ये** तु अत्यर्घ्यं परित्यज्य महार्घ्यमेव पञ्चममवधित्वेन मन्यन्ते । **अपरे** तु प्राथमिकमर्घ्यमगणयन्तः पञ्चभेदानञ्चन्ति । **परे** तु आवृत्तिरर्घ्यो महार्घ्योऽत्यर्घ्य इति चतुर एव भेदान् मेनिरे । तत्र प्रथमे पञ्चभेदमते चतुर्विंशतिसङ्ख्या महार्घ्याः क्रियमाणा भिन्नानि कर्माणि भवन्ति । न पुनरेकमत्यर्घ्याख्यं कर्म । तेन द्वितीयादिषु महार्घ्येषु पुनः पुनः सङ्कल्पो ब्राह्मणभेदो दक्षिणाभेदश्च । प्रथमपक्षे त एव ब्राह्मणाः सर्वान्ते एकैव दक्षिणेति फलभेदः । एवं **मतान्तरे**ष्वप्यूह्यम् ।

अथ, आवृत्यादि प्रक्षेपसङ्ख्या ।

"६६ आवृत्तिः । १५८४ अंशः । ३८०१६ लघुः ।
९१२३८४ अर्घ्यः । २१८९७२१६ महार्घ्यः ।
५२५५३३१८४ अत्यर्घ्यः ।" इत्येकः पक्षः ।

अथवा "२४ आवृत्तिः । ५७६ अंशः । १३८२४ लघुः ।
३३१७७६ अर्घ्यः । ७९६२६२४ महार्घ्यः ।
१९११०२९७६ अत्यर्घ्यः ।" इत्यपरः पक्षः ।

"आवृत्तिस्तु तृषाखौ क्षेपैरंशस्तु भेदमूकमितैः ।
लघुरुक्तस्तपनजलप्रमितैरर्घ्यस्तु वेदगिरियोधैः ॥
चापरथोञ्झहयारिप्रमितैः क्षेपैर्महानर्घ्यः ।
भजकबलशोणरामप्रमितप्रक्षेपतोऽत्यर्घ्यः ॥

अथवा

"आवृत्तिर्वीरमितैः क्षेपैरंशस्तिथीशैः स्यात् ।
वारिदलोकैस्तु लघुस्तीर्थच्छायाबलैरर्घ्यः ॥
भूरितरे षड्दंसप्रमितैः क्षेपैर्महानर्घ्यः ।
अत्यर्घ्यस्तुच्छधरानिकटाधिकसंमितक्षेपैः ॥"

आवृत्तिरत्र गदिता रसशास्त्रसङ्ख्यैः
क्षेपैः समुद्रवसुपाण्डवभूमिरंशः ।
ऋत्विन्दुशून्यवसुवह्निमितैर्लघुस्तै-
र्वेदाष्टवह्निकरभूनिधिभिर्मतोऽर्घ्यः ॥
शास्त्रेन्दुनेत्रहयनन्दगजेन्दुनेत्रैः
प्रक्षेपकैर्निगदितः कृतिभिर्महार्घ्यः ।
अत्यर्घ्यकोऽम्बुनिधिकुञ्जरचन्द्रराम
हव्याशबाणशरहस्तशरोन्मितः स्यात् ॥

अथवा,

आवृत्तिः किल गदिता युगाक्षिसङ्ख्यैः
प्रक्षेपै रसहयपाण्डवैर्मतोंऽशः ।
वेदाश्विद्विरदगुणेन्दुभिर्लघुः स्यात्
अर्घ्यर्तुऋषितुरगेन्दुवह्निरामैः ॥
अम्भोध्यक्षिरसकरर्तुनन्दशैलैः
प्रक्षेपैः कृतिभिरिहेरितो महार्घ्यः ।
अत्यर्घ्यो रसहयनन्दनेत्रशून्यभू-
चन्द्राङ्कशशिभिरीरितो बुधेन्द्रैः ॥

अत्र,

"पादयः पञ्च याद्यष्टौ कादयष्टादयो नव ।
एतद्भिन्नाक्षरं बिन्दुः सङ्ख्या तन्मेलनोद्भवा ॥

इति **वररुचिपरिभाषया**, प्रथमे चत्वारः श्लोकाः । अष्टौ वसव इति **पिङ्गलसूत्रादौ** प्रसिद्धतरपरिभाषया चरमे चत्वार इति विवेकः ।

**॥ इत्यर्घ्यप्रक्षेपसङ्ख्याविवरणम् ॥**

**॥ अथ पौराणमिश्रिता मन्त्राः ॥**

तत्र केचित्

"हिमघ्नाय तमोघ्नाय रक्षोघ्नाय च ते नमः ।
कृतघ्नघ्नाय देवाय नमस्ते धरणीधर ॥
नमस्ते पद्मनाभाय नमस्ते पद्मरूपिणे ।
पद्महस्त परंज्योतिःस्वरूपाय नमो नमः ॥

जगदुत्पत्तिनाशाय श्रीसूर्याय नमो नमः ।
भास्करोदयमार्तण्ड ज्योतिरात्मन् नमो नमः ॥
अण्डयोने सहस्राक्ष आदित्याय नमो नमः ।
सकलेशाधिरूढाय शार्ङ्गेशाय नमो नमः ॥
पद्ममूर्ते तपोमूर्ते सत्त्वमूर्ते नमो नमः ।
पद्महस्त परंज्योतिः पापनाश नमो नमः ॥
रथाङ्गस्थ महाबाहो त्र्यम्बकाय नमो नमः ।
कामाख्यः सृष्टिकर्ता च कामरूप नमो नमः ॥
नित्याय च निरन्ताय निष्कलाय नमो नमः ।
श्वेताश्व रथमारूढ दिवाकर नमो नमः ॥
अमोघनिजगर्भाय अष्टमूर्ते नमो नमः ॥

इति सार्धैः सप्तभिः श्लोकैः पञ्चदशमन्त्राः श्लोकार्धरूपाः । हंसः शुचिषत् ०, सूर्यो देवीमुषसं०, आकृष्णेन रजसा० इति ऋक् । एवमष्टादश । एतेषामन्ते श्रीसूर्याय नमो नमः इदमर्घ्यं समर्पयामीत्यंशः पार्थक्येन योजनीयः । तत अग्निमीळे० इति ऋग्वेदात्मने श्रीसूर्यनारायणायेत्यादि । इषे त्वोर्जे त्वा० यजुर्वेदात्मने । अग्न आयाहि वीतये इत्यृक् सामवेदात्मने । शन्नो देवीरभिष्टय इत्यृक् अथर्ववेदात्मने श्रीसूर्यायेति चत्वारो मन्त्राः । एवं द्वाविंशतिः । एहि सूर्य सहस्रांशो० इति श्लोकं यथालिङ्गमुक्त्वा श्रीसूर्यनारायणायेत्यादि "।

" दिवाकर नमस्तुभ्यं पापाज्ञानं प्रणाशय ।
त्रयीमयार्क विश्वात्मन् गृहाणार्घ्यं नमोऽस्तु ते ॥ "

श्रीसूर्यनारायणायेति द्वौ मन्त्रौ । एवं चतुर्विंशतिः **पौराणमिश्रिता** मन्त्रा इत्याहुः । तत्र " चतुर्वेदादिमैर्मन्त्रैश्चतुरोऽर्घ्यान् प्रदापयेत् " इति **वचनात्** वेदादिभूत एकैक एव मन्त्रो ग्राह्य इति । इषे त्वा इत्येतावन्मात्रस्यैव त्र्यक्षरस्य, इषे त्वोर्जे त्वेति पञ्चाक्षरस्य वा विकल्पेन एकस्मिन्नर्घ्ये विनियोगो वक्तव्यः । **तैत्तिरीयादिशाखासु** पञ्चाक्षर्याः शाखाभेदेन विनियोगदर्शनेऽपि **माध्यन्दिनीयानां** मते विभज्यैव विनियोगदर्शनात् । यदाह **कात्यायनः** । इषे त्वेति शाखां छिनत्त्यूर्जेत्त्वेत्यनुमार्ष्टि वायवस्थेति वत्सानपाकरोति इत्यादि । तत्**सर्वानुक्रमणिकासूत्रे**ऽपि इषे त्वा शाखानुष्टुब् विनियोगः **कल्पकारोक्तः** । एवमूर्जे त्वेति अनुमार्जनं पर्णादिपातनेन समीकरणमिति तु **देवयाज्ञिकभाष्ये । अथर्वणवेदे** तु प्रचरदवस्थायां **शौनकादिशाखायां** " ये त्रिषत्या " इति प्रथमा तावद् ऋक् पठ्यते, यथा—

" ये त्रिषत्याः परियन्ति विश्वा रूपाणि बिभ्रति ।
वाचस्पतिर्बला तेषां त्वं नो अद्य दधातु मे । "

शन्नो देवीरिति तु षष्ठे सूक्ते प्रथमा ऋक्। बह्वृचाभिमतो वर्गस्तैः सूक्तपदेन व्यवह्रियते। तेन प्रथमानुवाके ऊनत्रिंशदृगात्मके षड्विंशी सा ऋग् भवति। तत् **सर्वानुक्रमणिकाया**मपि तृतीये खण्डे—

"अथ सूक्तमन्त्राणामृषिदेवताछन्दांसि, तत्र प्रथमं ये त्रिषत्या इति त्रीणि सूक्तान्यानुष्टुभानीत्यादि"।

अत एव तच्छाखीयैर्ब्रह्मयज्ञे एतस्या एव आरभ्य पाठो दृश्यते। **बह्वृचादीनां** तु शं नो देवीरित्यस्याः पाठो न विरुध्यते। तस्या आथर्वणत्वाविशेषात्। आदिरेवाध्येतव्य इति निर्बन्धाभावात्। अत एव व्याकरणविषयमात्रप्रदर्शनतात्पर्यके **महाभाष्ये**ऽपि शन्नो देवीरित्यस्य लेखो नातीव विरुध्यते। एतद्बलादेव **पिप्पलादिशाखान्तरे**ष्वियमेव ऋक् प्रथमेत्युक्तिस्तु सर्वज्ञैकपरिच्छेद्या। तथाऽपि यावत्तद्दर्शनं "ये त्रिषत्या" इति ऋगेवार्घ्ये विनियोज्या। "यावदेकं स्मृतौ कर्म" इति **तन्त्रवार्तिको**क्तन्यायात् अस्याः प्राथम्ये सन्देहाभावाच्चेति युक्तमुत्पश्यामः।

**अन्ये** तु

नमस्ते घृणिने तुभ्यं सूर्याय ब्रह्मरूपिणे।
प्रचेतसे नमस्तुभ्यं नमो मीढुष्टमाय च॥
हिरण्यबाहवे तुभ्यं हिरण्यपतये नमः।
अम्बिकापतये तुभ्यमुमायाः पतये नमः॥
नमोऽस्तु नीलग्रीवाय नमस्तुभ्यं पिनाकिने।
विलोहिताय भर्गाय सहस्राक्षाय ते नमः॥
नमो हंसाय ते तुभ्यमादित्याय नमो नमः।
नमस्ते वरहस्ताय त्र्यम्बकाय नमो नमः॥
नमः सूर्याय रुद्राय भास्वते परमेष्ठिने॥

इत्येते नव मन्त्राः पूर्वोक्तपञ्चदशमन्त्रान्ते संयोज्याः। तत्र प्रतिमन्त्रं विकर्तनाय नमः इत्याद्येकैको मन्त्रो योज्यः। द्वाविंशादिषु त्रिषु तु, विकर्तनविवस्वान्मार्तण्डभास्कररविलोकप्रकाशकश्रीमल्लोकचक्षुर्ग्रहेश्वरलोकसाक्षित्रिलोकीशकर्तृहर्तृतमिस्रहतपनपावकशुचिसप्ताश्ववाहनगभस्तिहस्तब्रह्मण्यसर्वदेवनमस्कृतेभ्यो नमः, इति समष्टिमन्त्र एव त्रिः प्रयोज्य, इत्येवं चतुर्विंशति मन्त्रा इत्याप्याहुः। एष्वपि भुवनेशीषड्दीर्घयोगे वीर्यवत्तरतेत्यादि **ग्रन्थान्तरा**दुन्नेयम्।

**केचित्तु**, जगन्नेत्र जगन्नाथेति श्लोको घृणिः सूर्य आदित्यो न प्रभावेति मन्त्रश्चेति द्वयं हिमघ्नायेत्यादयश्चतुर्विंशति षड्विंशतिमन्त्रा अपि समप्रधानाः। सर्वत्रान्ते श्रीसूर्यनारायणाय नमः प्रसन्नार्घ्यं समर्पयामीति प्रसन्नपदसङ्घटितमेव पल्लवं योजनीयमाचक्षते। एतैरेव मन्त्रैरर्घ्यदानपक्षे तृचघटितमन्त्राणां न प्रयोगः। तेनानयोर्मन्त्रराश्योर्विकल्पः। आवृत्त्यंशलघ्वादिकल्पना

त्वस्मिन् पक्षे अस्ति न वेति विचार्यम्। एतत्प्रयोगजन्यस्य फलस्य दृष्टद्वारकत्वेऽपि दृष्टरूपत्वाद्यावत्फलसिद्धि पुनः पुनरावृत्तिर्न विरुध्यते। अवहननादिवत्। अत एव ब्रह्मज्ञानस्य कर्मसाध्यत्वेनादृष्टद्वारकत्वस्य विवरणादिसम्मतस्य सत्त्वेऽप्युपासनानां "आवृत्तिरसकृदुपदेशात्" इति साधितं **उत्तरमीमांसायाम्**।

**तेनांशादिकल्पनापक्षे** अंशस्यैककर्मत्वात् दशद्वादशभिरावृत्तिभिरेवेष्टसिद्धावपि षाष्ठन्यायेन न कर्म समापनीयम्। तदकल्पनापक्षे तु तावतां भिन्नकर्मत्वात्तावतैव समाप्तिः। एवं सङ्कल्पादिष्वपि भेदविशेषः पक्षद्वये मीमांसकैरूह्यः।

**परे तु**

नमोऽस्तु सूर्याय नमोऽस्तु भानवे नमोऽस्तु वैश्वानर जातवेदसे।
त्वमेव चार्घ्यं मम गृह्ण गृह्ण देवाधिदेवाय नमोऽस्तु तुभ्यम्॥
नमो भगवते तुभ्यं नमस्ते जातवेदसे।
दत्तमर्घ्यं मया भानो गृहाण त्वं नमोऽस्तु ते॥
एहि सूर्य सहस्रांशो तेजोराशे जगत्पते।
अनुकम्पय मां भक्त्या गृहाणार्घ्यं नमोऽस्तु ते॥
जयाय जयभद्राय हरिदश्वाय ते नमः।
दिव्याय दिव्यरूपाय ग्रहाणां पतये नमः॥
देवदेव जगन्नाथ सहस्रांशो दिवाकर।
पूजायाः परिपूर्त्यर्थं गृहाणार्घ्यं नमोऽस्तु ते॥
कालात्मा सर्वभूतात्मा वेदात्मा विश्वतोमुखः।
जन्ममृत्युजराव्याधिसंसारभयनाशनः॥
उदये ब्रह्मरूपस्तु मध्याह्ने तु दिवाकरः।
अस्तमाने स्वयं विष्णुस्त्रिमूर्तिस्तु दिवाकरः॥
सुवर्णपात्रानुगतं पञ्चरत्नसमन्वितम्।
गन्धपुष्पफलोपेतं गृहाणार्घ्यं दिवाकर॥
यस्योदयास्तसमये सुरमुकुटनिघृष्टचरणोऽपि।
कुरुतेऽञ्जलिं त्रिनेत्रः स जयति धाम्नां खनिः सूर्यः॥
ॐ विद्यां किलिकिलि कटुकेष्टसर्वार्थसाधय स्वाहा॥
ॐ ह्रां ह्रीं ह्रूं सः सूर्याय स्वाहा॥
ॐ स्वः स्वर्लोकाय सूर्यमूर्तये स्वाहा॥

एवं द्वादश अर्घ्यमन्त्राः । एषु श्लोकनवकैर्नव मन्त्राः । त्रयोदशाक्षरमन्त्रविशिष्टश्चतुर्थः श्लोक एको मन्त्रः । दशमो मन्त्रो विंशत्यक्षरः । एकादशो दशाक्षरः । द्वादशस्त्रयोदशाक्षरः । एतेषु प्रतिमन्त्रं अन्ते " त्रिपादूर्ध्व उदैत् " इति मन्त्रो योजनीयः । इति द्वादशार्घ्या **इत्याहुः** । एते च द्वादशार्घ्या न प्रधानकर्म । फलाश्रवणात् । फलवदर्घ्यान्तरप्रयोगसन्निधावभियुक्तैर्लेखनाच्चेत्यप्याहुः । युक्तं चैतत् । पञ्चममन्त्रे तथैव मन्त्रलिङ्गदर्शनात् । तेनोक्तार्घ्याणामेव प्रयोगे विशेषार्घ्योत्तरं प्रधानार्घ्योत्तरं वा कलशजलेनैतेऽर्घ्याः सकृद्देया इति दिक् ।

## ॥ इति अर्घ्यमन्त्राः ॥

एवं प्रत्यहं द्वादशावृत्तय एकैकेन ब्राह्मणेन कार्या इत्युत्तमः पक्षः । षडिति मध्यमः । चतस्र इत्यवमः । तिस्र इति निकृष्टः । यथाशक्तीति ततोऽपि चरमः । प्रथमदिनवदेव आसमाप्तिदिवसं कार्यम् । न न्यूनमधिकं वा । आचारस्तु सम्पूर्णस्यांशस्य सार्धांशस्य च प्रत्यहं क्रियमाणत्वेन दृश्यते । तद्द्रव्यलोभेन कर्माङ्गलोपैकफलकम् । त्वरया महतः कर्मणः समाप्तिरिष्यते चेत् ब्राह्मणा एवाधिका वरणीया, न पुनरेकस्य ब्राह्मणस्य अर्धांशाधिककरणमुचितम् ।

प्रात्यहिंकाद्द्विगुणं रविवारे कार्यम् । अस्य च द्वैगुण्यस्य नैमित्तिकत्वेन कर्तृसंस्कारकत्वेन वा आरादुपकारकाङ्गत्वं न पुनः प्रधानसङ्ख्यापूर्तावुपयोगः ।

एवं प्रात्यहिकसङ्ख्यामभीप्सितां समाप्य पुरुषसूक्तन्यासं सप्तषडङ्गीं अर्धर्चषडङ्गमात्रं वा स्वशरीरे न्यस्य पूर्ववदावाहनविनिर्मुक्तैः षोडशभिः पञ्चभिर्वोपचारैरुक्तमन्त्रैरेव पूजयेत् । पुरुषसूक्तन्यासं देवस्याङ्गे कृत्वा पूजोत्तरं स्वाङ्गे तृचघटितान् न्यासान् कुर्यादित्यपि **वदन्ति** । **ये** तु षडङ्गन्यासानस्त्रादिहृदयान्तं प्रातिलोम्येन कुर्यादि**त्याहुः**, **ते** प्रमाणाभावादुपेक्ष्याः ।

ततोऽर्घ्यजलं गृहीत्वा तृचेन सौरगायत्र्या वा पिबेत् पाययेच्च । नमो मित्रस्येति द्वादशर्चस्य सूक्तस्य सूर्यपुत्रायाभितपसे ऋषये नमः । सूर्याय देवतायै नमः । जगतीच्छन्दसे दशम्यास्त्रिष्टुप्छन्दसे नमः । सूर्यनमस्कारे विनियोगाय नमः । इति यथास्थानं विन्यस्य, एकैकयर्चा मित्रादिभ्यो द्वादशप्रदक्षिणापूर्वकनमस्कारान् कुर्यात् ।

तत्र एकैकर्च्युत्तरं ङे नमोऽन्तं मित्रादिनामाप्येकैकं योजयन्ति **केचित्** । अत्रावाहनादिमुद्राः प्रदर्शयेदित्यपि **वदन्ति** । तस्य प्रयोजनं मृग्यम् ।

यज्ञेन यज्ञं० विश्वतश्चक्षुरित्येताभ्यां पुष्पाञ्जलिं दद्यात् । नमः सवित्रे इत्यनेनेति **परे** । आकृष्णेनेति स्तुतिः । अत्र सति सम्भवे **भविष्योत्तरपुराण**स्थं **रुद्रयामल**स्थं वा सौरं सहस्रनामस्तवं **ब्रह्मपुराण**स्थमष्टोत्तरशतनामस्तवं **स्कान्दं** द्विसप्ततिनामस्तवं **पाद्म**मेकविंशतिनामस्तवं **कौर्मा**दिस्थं द्वादशनामस्तवं सूर्यहृदयाऽऽदित्यहृदयादिसंज्ञितान् वा स्तवान् पठेत् ।

महासौरैर्वक्ष्यमाणमुपस्थानं समाप्य वा यथासम्भवं पठेत् । तेषां स्तवानां तत्तत्प्रकरणस्थैरेव वचनैः स्वतन्त्रतायाः कर्माङ्गतायाश्च संयोगपृथक्त्वन्यायेन प्रायेण सिद्धत्वात् । ततः "सविता पश्चात्तात्" इति प्रार्थना । अत्र प्रार्थनाया बहून् श्लोकान् **प्रयोगकारा** लिखन्ति । तांश्च यथासंभवं पठेत् ।

ततः—

रविः कर्ता रविर्भोक्ता रविः सर्वमिदं जगत् ।
रविर्जयति सर्वत्र यो रविः सोऽहमेव हि ॥
त्वमेवाहमहं त्वं च सच्चिन्मात्रवपुर्धरः ।
आवयोरन्तरभ्रान्तिस्त्वत्प्रसादात्प्रणश्यतु ॥

इत्युक्त्वा गुरुदेवतामन्त्रात्मनामैक्यं विभाव्य सूर्यरूपिणमात्मानं ध्यात्वा, आवरणदेवतास्तेजोमयीः कृत्वा सूर्यतनौ प्रविष्टा विभाव्य, क्षणं ध्यात्वा नत्वा, तालत्रयेण देवं प्रबोध्य तेजोमयमात्रं विभाव्य 'अभ्यारमिदद्रय' इति वा तृचं चोच्चार्य, श्रीसूर्यं साङ्गं सपरिवारं विसर्जयामि नमः स्वस्थानं गच्छेत्युक्त्वा तत्तेजः संहृतिमुद्रया कुसुमेन सङ्ग्राह्य घ्राणेन वहन्नाडीद्वारा हृदयं नीत्वा पुनः सगुणमूर्तित्वेन ध्यात्वा षडङ्गं विन्यस्य पञ्चोपचारैर्मानसैरभ्यर्च्य क्षणं विश्राम्य पुनस्तेजोमयं विचिन्त्य ब्रह्मरन्ध्रं नीत्वा सुषुम्णावर्त्मना पुनर्हृदयमानीय दण्डाकारं सूक्ष्मतरं तेजो विभाव्य मूलाधारे कुण्डलिनीत्वेन परिणमयेत् ।

॥ **इति विसर्जनम्** ॥

अथ महासौरैरुपस्थानम् । महासौरमन्त्राणां ऋष्यादीन् एकदैव यथास्थानं विन्यस्य, उत्थाय, अर्थानुसन्धानपुरःसरं सूर्याभिमुख ऊर्ध्वबाहुद्वयः पठेत् । यथासम्भवं स्तोत्राणि सूर्यसहस्रनामानि चार्थानुसन्धानपूर्वकमेव ततः पठेत् ।

उदुत्यमिति त्रयोदशर्चस्य सूक्तस्य कण्वपुत्रः प्रस्कण्वो नव गायत्र्यश्चतस्रोऽनुष्टुभः ।

चित्रं देवानामिति षडर्चस्य आङ्गिरसपुत्रः कुत्सस्त्रिष्टुप् ।

इन्द्रं मित्रमिति द्वयोरौचथ्यो दीर्घतमास्त्रिष्टुप् ।

हंसः शुचिषदित्येकस्या गौतमपुत्रो वामदेवो जगती ।

यत्त्वा सूर्यस्य भूमिपुत्रोऽत्रिस्त्रिष्टुप् ।

यदद्येत्येकस्या ऋच उत्सूर्येति तिसृणां ऋचां मैत्रावरुण उद्वेतीति सार्धानां चतसृणां ऋचां मैत्रावरुणो वसिष्ठस्त्रिष्टुप् छन्दांसि ।

उदुत्यद्दर्शतमिति तिसृणां मैत्रावरुणिर्वसिष्ठ ऋषिर्बृहतीसतोबृहतीपुरउष्णिहः क्रमात् ।

बण्महानिति द्वयोर्भृगुपुत्रो जमदग्निर्बृहतीसतोबृहत्यौ ।

नमो मित्रस्येति द्वादशर्चस्य सूक्तस्य सूर्यपुत्रोऽभितपा ऋषिर्जगती दशमी त्रिष्टुप् ।

सूर्यो न इति पञ्चर्चस्य सूक्तस्य सूर्यपुत्रश्चक्षुर्ऋषिः गायत्र्यश्छन्दांसि ।

विभ्राड् बृहदिति चतुरर्चस्य सूर्यपुत्रो विभ्राड् जगती चतुर्थी प्रस्तारपङ्क्तिः ।

आयं गौः इति तृचस्य सार्पराड् ऋषिर्गायत्री । आयं गौः इति तृचं **केचित्** पठन्ति ।

सर्वासां सूर्यो देवता । सूर्योपस्थाने विनियोगः । एतदन्तेऋतं च सत्येति तृचं **केचित्** पठन्ति ।

**॥ इति उपस्थानम् ॥**

ततो ब्रह्मार्पणविभावनम् । ॐ तत्सत् पदानामुच्चारणस्य सर्वकर्मसाङ्गताऽऽधायकतायाः **आपस्तम्बेन भगवद्गीतासु** च कथनात् ।

ब्रह्मार्पणविभावनं च बहुविधम् । तथा च **व्यासः**—

ब्रह्मणा दीयते देयं ब्रह्मणे सम्प्रदीयते ।
ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् ॥

नाहं कर्ता सर्वमेतद्ब्रह्मैव कुरुते तथा ।
एतद्ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥

प्रीणातु भगवानीशः कर्मणाऽनेन शाश्वतः ।
धियेत्थं कर्मकरणं ब्रह्मार्पणमिदं परम् ॥
यद्वा फलानां सन्न्यासं प्रकुर्यात्परमेश्वरे ।
कर्मणामेतदप्याहुर्ब्रह्मार्पणमनुत्तमम् ॥ इति ।

ततो गृहं गच्छेत् । प्रतिरविवारं द्वादश ब्राह्मणान् भोजयेत् "विप्रान् द्वादश शक्त्या वा भोजयेद्रविवासरे" इति **भविष्योत्तरवचनात्** । यथाशक्ति वा ।

एवं,

"अल्पज्वरे त्वेकदिनं शिरोरोगे दिनत्रयम् ।
शूले सप्तदिनं कार्यं षण्मासान् क्षयरोगके ॥" इति

यद्यपि ज्वरादिनिमित्तकप्रयोगेषु नांशपूर्तिः क्षयेऽपि च पादोनश्चतुर्लघुः, एवं नार्घ्यपूर्तिः, तथापि वाचनिकत्वात् तावतैव परिपूर्णता मन्तव्या । एवं "उदयेऽर्घ्यं सदा दत्त्वा सिद्धिं संवत्सराल्लभेत्" इति सिद्धिकामप्रयोगेऽपि व्यवस्था द्रष्टव्या । एतद्भिन्नरोगेषु तु अंशाद्यन्यतमं सङ्कल्प्य यथाशक्त्या नियतदिवससङ्ख्ययैव समापयेत् । **केचित्तु** उक्तरोगेष्वपि अंशलब्धा-

दिकमेव पूर्णं कार्यम्। तस्य च दिवससङ्ख्यायामनियततायां प्राप्तायामेष नियमः। तेन ब्राह्मणविवृद्ध्या अंशं लघुं वैकस्मिन्नेव दिने त्वरितः कारयेत्। एवमन्योऽपीत्याहुः। तद्वृथा-निर्बन्धावहम्।

" वैरिचक्षुः क्षयार्थं तु प्रातिलोम्येन कारयेत्।
अयुते त्वयुते धेनुरेका स्याद्दक्षिणाधिका ॥"

प्रातिलोम्यं नाम द्वादशपादेषु मो अहं इत्यादि उद्यन्नद्येतिपर्यन्तं प्रक्षिप्यार्धर्चेषु द्विषन्तमित्यारभ्यादिपर्यन्तं क्षिप्त्वा, उदगादयमित्याद्यृक्त्रयं ततो यथास्थितं तृचमिति **वदन्ति**। वस्तुतस्तु, उक्तेषु द्वाविंशतिमन्त्रेषु चरममारभ्य प्रथमपर्यन्तं तृचमृचोऽर्धर्चाः पादा इति क्रमेण प्रक्षेपः कार्य इति। अधिकेति तावत्या एव दक्षिणात्वभ्रमं निराकर्तुम्।

यद्यपि " अर्घ्यं दद्यादानुलोम्यात्प्रातिलोम्येन वा पुनः। इति **शौनकीये,**

" एवमर्घ्याः प्रदातव्याः पुरुषैस्तु विचक्षणैः।
प्रतिलोम्यप्रकारेण आनुलोम्येन वा पुनः ॥"

इति **वचनान्तरे** चानुलोम्यप्रातिलोम्ययोरैच्छिक एव विकल्पो भासते, भ्राम्यन्ति **केचित् पद्धतिकारा** एवमेव, तथाऽपि रोगघ्नश्च द्विषघ्नश्चेत्युपसंहारे पक्षद्वयोक्ते रोगहरशत्रुहर-प्रयोगभेदेन आनुलोम्यप्रातिलोम्ययोर्व्यवस्थित एव विकल्पः। अत एव पादार्धर्चेति वचने आनुलोम्यमात्रग्रहणं रुजार्दित इति कर्तृविशेषणं च। वैरिचक्षुरिति वचने वैरी च चक्षुषी च तेषां क्षयायेति विग्रहः। चक्षुः क्षय इत्युन्मादादेरुपलक्षणम्। भुक्तिमुक्तिप्रदायकप्रयोगे तु पाठक्रमाविरोधाय आनुलोम्यमेवाश्रयणीयमिति सर्वं शिवम्।

**॥ इति श्रीभास्करोन्नीते तृचभास्करे ॥**

**॥ अर्घ्यदानविधिः ॥**

॥ समाप्तोऽयं प्रथमो भागः ॥

---

# अथ श्रीभास्कररायभारतीप्रणीतस्य

## "तृचभास्कर"स्य

## द्वितीयो भागः ।

## श्रीभास्करतृचाराधनप्रयोगविधिः ।

पूर्वं निर्णीतोऽर्थो विदुषामेव प्रयोगार्हः ।
केवलवैदिकमुद्दिश्याथो वच्मि स्फुटं प्रयोगविधिम् ।

तत्रायं सामग्रीसङ्ग्रहः ।

वस्त्रयुग्मानि पात्राणि केयूरं करकण्ठगाः ।
मणिबन्धाङ्गुलीनां च भूषाः स्युर्मधुपर्कके ॥
जलपात्राणि दर्व्यश्च विप्राणामासनानि च ।
प्रसन्नार्घ्यो विशेषार्घ्यो वर्धनी कलशस्तथा ॥
पाद्याचमनपात्रे च मधुपर्कार्घ्यपात्रके ।
अष्टानामुपपात्राणि पिधानान्याश्रया अपि ॥
यन्त्रं वा सूर्यकान्तो वा सूर्यस्य प्रतिमाऽथवा ।
तदाधारमहापात्रमर्घ्यक्षेपार्थभाजनम् ॥
पञ्चामृतं पञ्चगव्यं पिष्टातो गन्धतैलकम् ।
धूपदीपौ च नैवेद्यमेषां पात्राणि चाश्रयाः ॥
घण्टा वाद्यानि च छत्रं चामरे दर्पणं तथा ।
देवासनं देववस्त्रं देवताभरणानि च ॥
उपवीतं दशाङ्गादि वर्तिका विविधान्नकम् ।
गुडैलाजीरकं चैव ताम्बूलं रक्तचन्दनम् ॥
सर्वौषध्यः सप्तमृदः श्यामाकास्तस्य तण्डुलाः ।
तिला यवाः सर्षपाश्च शालयो वेणुतण्डुलाः ॥
हिरण्यं पञ्चरत्नानि रक्तानि कुसुमानि च ।
रक्ताक्षताश्च भूयांसो गन्धा नानाविधा अपि ॥
दूर्वाः कुशाः कुशाग्राणि रक्तानि कमलानि च ।
करवीरं जपापुष्पं रोचना कुङ्कुमं तथा ॥
जातीलवङ्गकङ्कोलकर्पूराण्यसितागरुः ।
विष्णुक्रान्ता तीर्थजलं तीर्थेतरजलं घटाः ॥

रथ्यामध्याच्च वल्मीकादश्वस्थानाद्गजालयात् ।
नदीसङ्गाद् ह्रदाद् गोष्ठादानेयाः सप्तमृत्तिकाः ॥
कनकं कुलिशं नीलं पद्मरागश्च मौक्तिकम् ।
रत्नानीमानि पञ्च द्वात्रिंशत्सर्वौषधान्यथ ॥
विष्णुक्रान्ता कुशा दूर्वा रक्तोत्पलमुदुम्बरम् ।
तुलसी बर्हिषं बिल्वं शङ्खपुष्पी शतावरी ॥
चम्पाऽश्वगन्धा निर्गुण्डी रक्ताः पीताश्च सर्षपाः ।
प्रियङ्गुपनसौ व्रीहिरपामार्गश्च जीवकः ॥
दधि दुग्धं घृतं पद्मपत्रमश्वत्थपत्रकम् ।
नीलोत्पलं सितः पीतो रक्तश्चैव कुरण्टकः ॥
गोधूमा भद्रकं मुस्ता वचा गुञ्जा पलाशकम् ।
आम्राश्वत्थवटप्लक्षजम्बूनां पल्लवास्त्वचः ॥
सेध्यकं कुङ्कुमं कुष्ठं ह्रीबेरागुरुचन्दनम् ।
जटामांसी मुरश्चेति सौरं गन्धाष्टकं मतम् ॥
ब्राह्मणाश्चैव सद्वृत्ता वेदवेदाङ्गपारगाः ।
दक्षिणा चेति सामग्रीमादौ सम्पादयेद्बुधः ॥

दैवज्ञनिर्दिष्टे दिवसे रोगादिनिमित्तप्राप्तौ वा तान्त्रिकसमुच्चितं केवलमेव वा यथाधिकारं प्रातःकृत्यं शिरःस्नानादिपूर्वकं निर्वर्त्य शुक्लाम्बरधरः प्रयतो गायत्र्या त्रिः प्राणानायम्य देशकालौ सङ्कीर्त्य एवंगुणविशेषणविशिष्टायां पुण्यतिथौ आरभ्य सर्वास्तिथीः प्रतिपद्द्वितीयातृतीयेत्यादिक्रमेण पृथक् पृथगुच्चार्य एतावत्सङ्ख्याकासु तिथिषु ममामुकरोगनिरासद्वाराऽऽरोग्यसिद्ध्यर्थं श्रीसूर्यप्रीत्यर्थं वा उद्यन्नद्येति सूर्यदैवत्येन तृचेन प्रत्यहमावृत्त्यंशादिभिर्वा अमुकसङ्ख्याकब्राह्मणद्वाराऽत्यर्ध्याद्यन्यतमं कारयिष्ये करिष्ये वा । इति सङ्कल्प्य ।

विनायकपूजां कुलदेवतापूजां पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च कृत्वा । पुरोहितं मधुपर्कादिभिः सम्पूज्य । आत्मशाखया ऋत्विक्शाखया वा ऋत्विजोऽपि मधुपर्कादिभिः सम्पूज्य, प्रत्येकं वस्त्रयुग्मोदकपात्रकेयूरकरकण्ठकर्णमणिबन्धाङ्गुलीनामाभरणानि पुरोहिताय ऋत्विग्भ्यश्च देयानि ।

ततः स्वयं ऋत्विग्वा उदकान्तिकं गत्वा । आचम्य ।
ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभोजने ।
तिष्ठ देवि शिखाबन्धे चामुण्डे ह्यपराजिते ॥
इति मन्त्रेण शिखां कुशैर्बद्ध्वा । पुनराचम्य ।

" सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम् ।

तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसि " ॥

इति बाहुद्वयं हृदयं च संस्पृशेत् । प्रतिप्रधानं मन्त्रावृत्तिः ।

" उत्तिष्ठन्त्विह भूतानि भूमौ तिष्ठति भूपतिः ।

सर्वेषामविरोधेन ब्रह्मकर्म समारभे ॥ "

इति भूतानि प्रार्थ्य ।

देवतामण्डपे चतुर्द्वारमतिविचित्रं विचिन्त्य, " अन्तरितं रक्षोऽन्तरिता अरातयः हुं फट् ", इति मण्डपान्तरक्षतान् प्रक्षिप्य । ॐ द्वां द्वारपालेभ्यो नमः इति द्वारपालान् नत्वा । बहिर्निर्गच्छतां विघ्नराशीनां स्ववामाङ्गसङ्कोचेन मार्गं ददानो वहन्नाडीपादपुरःसरं मण्डपान्तः प्रविशेत् । ॐ हुं फट् इति यागभूमिं प्रोक्ष्य, गन्धपुष्पाक्षतान् अभित आकीर्य द्वाराभिमुखो द्वारदेवताः पूजयेत् ।

पूर्वद्वारस्य दक्षशाखायां ऊर्ध्वभागे ॐ धां धात्रे नमः । तत्रैवाधो भागे ॐ गं गङ्गायै नमः । द्वारस्य वामशाखायाम् ऊर्ध्वभागे ॐ विं विधात्रे नमः । तत्रैवाधो भागे ॐ यं यमुनायै नमः । अथ उदुम्बरे ॐ दें देहल्यै नमः । उपर्युदुम्बरे ॐ द्वां द्वारश्रियै नमः । एवं दक्षिणपश्चिमोत्तरद्वाराणि तत्तद्द्वाराभिमुखः पूजयेत् ।

मध्ये सिंहासनं ध्यात्वा तस्य पूर्वद्वारे ॐ भं भद्राय नमः । ॐ सुं सुभद्राय नमः । दक्षिणद्वारे ॐ बं बलाय नमः । ॐ प्रं प्रबलाय नमः । पश्चिमद्वारे ॐ चं चण्डाय नमः । ॐ प्रं प्रचण्डाय नमः । उत्तरद्वारे ॐ जं जयाय नमः । ॐ विं विजयाय नमः । सिंहासन-स्याभितः ॐ गं गणपतये नमः । ॐ सं सरस्वत्यै नमः । ॐ गुं गुरुभ्यो नमः । ॐ दुं दुर्गायै नमः । ॐ क्षें क्षेत्रपालाय नमः । ॐ मां मातृभ्यो नमः । ॐ सं सर्वर्षिभ्यो नमः । ॐ पिं पितृदेवताभ्यो नमः । मध्ये ॐ वां वास्तुपुरुषाय नमः । दीपस्थाने ॐ दीं दीपनाथाय नमः । ऊर्ध्वं ॐ ब्रं ब्रह्मणे नमः । इति तत्तद्देवताभ्यो ध्यानपूर्वकं तत्र तत्र गन्धपुष्पाक्षतान् विकीर्य । ॐ विं विश्वशक्त्यै नमः । ॐ मां मायाशक्त्यै नमः । ॐ आं आधारशक्त्यै नमः । ॐ कं कूर्माय नमः । ॐ शें शेषाय नमः । ॐ पृं पृथिव्यै नमः । इति षण्मन्त्रैः सकुशं पुष्पं आसनस्थाने क्षिपेत् ।

पृथिवीति मन्त्रस्य मेरुपृष्ठऋषिः कूर्मो देवता सुतलं छन्दः आसने विनियोगः इति ऋष्यादिकमुच्चार्य, अनुच्चार्य वा, न्यसेत् । पृथिवीति मन्त्रस्य मेरुपृष्ठाय ऋषये नमः शिरसि । कूर्माय देवतायै नमः हृदये । सुतलाय छन्दसे नमः मुखे । आसने विनियोगाय नमः करसम्पुटे । इति न्यस्य । पृथिवीति मन्त्रस्य ब्रह्मणे ऋषये नमः । अनुष्टुप्छन्दसे नमः । पृथिव्यै देवतायै नमः । आसने विनियोगाय नमः । इति यथास्थानं न्यस्य ।

" पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ "

इति दर्भमुष्ट्यादिरूपं यथोक्तमासनं भुवि प्रसार्य ।

" विष्णुशक्तिसमुत्पन्ने शङ्खवर्णमहीतले ।
अनेकरत्नसम्भूते भूमिदेवि नमोऽस्तु ते ॥ "

इति भुवं नत्वा । ॐ कं कमलासनाय नमः । ॐ अं अनन्तासनाय नमः । ॐ यों योगासनाय नमः । ॐ विं विमलासनाय नमः । ॐ कूं कूर्मासनाय नमः । ॐ पं परमसुखासनाय नमः । इति षड्भिरासनमभ्यर्च्य । सुरभिमुद्रया प्रोक्ष्य, भूर्भुवः स्वरोम् इत्युपविशेत् ।

अपक्रामन्त्वपसर्पन्त्वित्यनयोर्वराहऋषये नमः शिरसि । भूम्यै देवतायै नमः हृदि । अनुष्टुपूछन्दसे नमः मुखे । भूप्रार्थने विनियोगाय नमः करसम्पुटे । इति न्यस्य । ॐ भूम्यै अङ्गुष्ठाभ्यां नमः । ॐ विश्वम्भरायै तर्जनीभ्यां नमः । ॐ धात्र्यै मध्यमाभ्यां नमः । ॐ पृथिव्यै अनामिकाभ्यां नमः । ॐ धरण्यै कनिष्ठिकाभ्यां नमः । ॐ उर्व्यै करतलकरपृष्ठाभ्यां नमः । ॐ भूम्यै हृदयाय नमः । ॐ विश्वम्भरायै शिरसे स्वाहा । ॐ धात्र्यै शिखायै वषट् । ॐ पृथिव्यै कवचाय हुम् । ॐ धरण्यै नेत्रत्रयाय वौषट् । ॐ उर्व्यै अस्त्राय फट् । इति न्यस्य ।

अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ।
सर्वेषामविरोधेन ब्रह्मकर्म समारभे ॥
अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥

इति वामपार्ष्णिर्भूमौ त्रिः सकृद्वा घातेन भौमान् विघ्नान् निरस्य । दक्षिणहस्तस्य तर्जनीमध्यमाभ्यां वामहस्ततले ताडनेन शब्दत्रयमुपर्युपरि कृत्वा अन्तरिक्षान् विघ्नानुत्सार्य । स्वस्य सच्चिदानन्दब्रह्मात्मतां विभावयन् क्रूरदृष्ट्यवलोकनेन दिव्यांश्च विघ्नान् परिहृत्य । ज्वालादंष्ट्राकरालं सुदर्शनास्त्रं ध्यात्वा । ॐ सर्वभूतनिवारणाय शार्ङ्गाय सशरायास्त्रराजाय सुदर्शनाय हुं फट् । इति स्वकल्पितमर्यादान्तं प्रेर्य ॥ ॐ तपः सत्यात्मने अस्त्राय फट् । यं रं लं वं शं षं सं हं ळं क्षं । इति मन्त्राभ्यां करतले करपृष्ठे कूर्परे मणिबन्धे कराग्रे करमूले चेति षट् शुद्धीः करान्तरसम्मार्जनेन कुर्यात् । प्रतिप्रधानं मन्त्रावृत्तिः । उपर्युपरि तिसृभिरभितो दशभिश्च तर्जन्यङ्गुष्ठजन्यछोटिकाभिः पूर्वाद्यधोऽन्तं ॐ तप इति मन्त्रेण त्रयोदशवारं पठितेन दशदिशो बद्ध्वा । ॐ नमो भगवते वज्रशृङ्खलाय नमः, इति स्वस्याभितो वज्रशृङ्खलां प्रकल्प्य, तत्परितो वं इति जलपरिखां तत्परस्तात् अग्निप्राकारात्र तिष्ठ तिष्ठ स्वाहा इत्यग्निप्राकारत्रयं, ततोऽपि परस्तात् यं य य ये यं ये यं ये यं य य य यं यं यं ये यः ( १७ अक्षराणि ) इति वायव्यास्त्रेण वायुं बद्ध्वा । तत्परतो ' हं ' इत्याकाशमभिमन्त्रयेत् ।

"क्षेत्रस्य पतिना वयं हितेनेव जयामसि ।
गामश्वं पोषयित्वा स नो मृळातीदृशे ।"

इति क्षेत्रपालं नत्वा ।

"येभ्यो माता मधुमत्पिन्वते पयः,
पीयूषं द्यौरदितिरद्रिबर्हाः ।
उक्थशुष्मान् वृषभरान् स्वप्नसस्तां,
आदित्यामनु मदा स्वस्तये ॥

एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।
बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् ॥

इति पठित्वा ।

तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥

इति क्षेत्रपालानुज्ञां प्रार्थयेत् । ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः इति वा, तृचेन वा प्रणवेन वा त्रिः प्राणानायम्य ।

स्वस्ति श्रीपरमशिवनाथपादाद्यशेषगुरुपारम्पर्यक्रमेण यावत्स्वगुरुपादाब्जं तावत्प्रणमामि, इति प्रणम्य । शिरसि ॐ गुं गुरुभ्यो नमः । ॐ पं परमगुरुभ्यो नमः । ॐ पं परात्परगुरुभ्यो नमः । ॐ पं परमेष्ठिगुरुभ्यो नमः । इति विचिन्त्य नमेत् ।

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥

ॐ दुं दुर्गायै नमः इति दक्षभुजे ।

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ।

ॐ गं गणपतये नमः । इति वामभुजे । "क्षेत्रस्य पतिना वयं०" ॐ क्षें क्षेत्रपालाय नमः दक्षजानुनि ।

ॐ प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती ।
धीनामवित्र्यवतु ॥

ॐ सं सरस्वत्यै नमः । इति वामजानुनि । ॐ आं आत्मने नमः । ॐ अं अन्तरात्मने नमः । ॐ पं परमात्मने नमः इति हृदि । अग्रे सूं सूर्याय नमः । इति विचिन्त्य नमेत् ।

एतावदशक्तौ तु, उत्तिष्ठन्त्विति भूतानि प्रार्थ्य, पृथ्वि त्वयेति आसनं प्रसार्य, भूर्भुवः स्वरोम् इत्युपविश्य, ॐ तपः सत्यात्मने इति दश दिशो बद्ध्वा, तीक्ष्णदंष्ट्र इति क्षेत्रपालमनुजानीयात्।

॥ इति बाह्यभूशुद्धिः ॥

गायत्र्या प्राणानायम्य। इह ऋत्विजः पूर्ववत् सङ्कल्पं कुर्युः। ममेति पदस्थाने यजमानस्य अमुकशर्मगोत्रस्येत्यूहः। स्वतः प्रयोगे तु नात्र सङ्कल्पः। आरब्धकर्माङ्गत्वेन भूभूतशुद्धिप्राणप्रतिष्ठामातृकान्यासविशेषन्यासान् करिष्ये इति तु सङ्कल्प्य, असङ्कल्प्य वा।

ब्रह्मरन्ध्रगते चन्द्रमण्डलेऽमृतवर्षिणीम्।
भवानीं भूमिशुद्ध्यर्थं भावयेदमृतेश्वरीम् ॥
ततस्तन्मौलिनिष्यन्दसुधाकल्लोलवृष्टिभिः।
चिन्तयेन्मग्नमात्मानं भूमिशुद्धिरियं भवेत् ॥

॥ इत्यान्तरभूशुद्धिः ॥

लं श्रीं क्लीं इति षट् करशुद्धीः कुर्यात्। प्रतिप्रधानं मन्त्रावृत्तिः। गुरुत्रयं प्रणम्याप्रणम्य वा।

“नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः।
यजाम देवान् यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवाः।”

इति नत्वा। मातृकोपसंहारं कुर्यात्। क्षंकारं ळंकारे संहरामि। ळंकारं हंकारे संहरामि। हंकारं संकारे संहरामि। संकारं षंकारे०। षंकारं शंकारे। शं० वं०। वं० लं। लं० रं०। रं० यं०। यं० मं०। मं० भं०। भं० बं०। बं० फं०। फं० पं०। पं० नं०। नं० धं०। धं० दं०। दं० थं०। थं० तं०। तं० णं। णं० ढं०। ढं० डं०। डं० ठं०। ठं० टं०। टं० ञं०। ञं० झं०। झं० जं०। जं० छं०। छं० चं०। चं० ङं०। ङं० घं०। घं० गं०। गं० खं०। खं० कं०। कं० अः०। अः० अं०। अं० औं०। औं० ओं०। ओं० ऐं०। ऐं० एं०। एं० ॡं०। ॡं० ऌं०। ऌं० ॠं०। ॠं० ऋं०। ऋं० ऊं०। ऊं० उं०। उं० ईं०। ईं० इं०। इं० आं०। आं० अं०। अंकारं परमात्मनि संहरामि। इति ध्यानपूर्वकमुपसंहरेत्। अयं च मातृकोपसंहारः कृताकृतः।

अस्य श्रीशरीरस्य ब्रह्मर्षये नमः। प्रकृतिपुरुषछन्दसे नमः। जीवात्मदेवतायै नमः। सकलपुरुषार्थसिद्धौ विनियोगाय नमः। इति यथास्थानं न्यस्य।

पादादि जानुपर्यन्तं भूतत्त्वं चतुरस्रकम्।
लं बीजं लाकिनी शक्तिसहितं ब्रह्मदैवतम् ॥

निवृत्तिकलयोपेतं पीतं वज्रैश्च लाञ्छितम् ।
जान्वादि नाभिपर्यन्तमप्तत्त्वं विष्णुदैवतम् ॥
अर्धचन्द्राकृति श्वेतं शृङ्गयोः पद्मलाञ्छितम् ।
प्रतिष्ठाकलयोपेतं वं बीजं काकिनीयुतम् ॥
नाभ्यादि हृदयान्तं तु वह्नितत्त्वं त्रिकोणकम् ।
रं बीजं राकिनीयुक्तं आरक्तं रुद्रदैवतम् ॥
विद्यया कलयोपेतं लाञ्छितं स्वरितकैस्त्रिभिः ।
हृदयादि भ्रुवोर्मध्यपर्यन्तं वायुमण्डलम् ॥
षड्बिन्दुयुग् वृत्तयुक् षट्कोणमीश्वरदैवतम् ।
कृष्णं शान्तिकलोपेतं यं बीजं याकिनीयुतम् ॥
भ्रूमध्याद्ब्रह्मरन्ध्रान्तं खं सदाशिवदैवतम् ।
शान्त्यतीताकलोपेतं हं बीजं हाकिनीयुतम् ॥
वृत्ताकारं धूम्रवर्णं चिन्तयेद्ध्वजलाञ्छितम् ।
पञ्चभूतमये देहे धर्मकन्दसमुद्भवम् ॥
ऐश्वर्याष्टदलं ज्ञाननालं वैराग्यकर्णिकम् ।
अधोमुखं तु हृत्पद्मं प्रणवेनोर्ध्वमुन्नयेत् ॥
हृत्पद्मकर्णिकामध्ये जीवात्मानं विचिन्तयेत् ।
अनाद्यविद्यासंछन्नं प्रदीपकलिकोपमम् ॥
आराग्रमात्रं परचिद्रूपं दर्पणसन्निभम् ।
मूलाधारे कुण्डलिनीं बिसतन्तुतनीयसीम् ॥
अध्युष्टवलयाकारां तडित्कोटिसमप्रभाम् ।
सर्वदेवमयीं ध्यायेत्प्रसुप्तभुजगीमिव ॥
गुदतो द्व्यङ्गुलादूर्ध्वं मूलाधारे चतुर्दले ।
वादि सान्तांश्चतुर्वर्णान् वरदाद्याश्च देवताः ॥
मध्ये तु साकिनीं पञ्चवक्त्रामस्थ्यभिमानिनीम् ।
तदूर्ध्वं शेफसः स्थाने स्वाधिष्ठानाब्जषड्दले ॥
बादिलान्तांश्च षड्वर्णान् बन्धिन्याद्याश्च देवताः ।
मध्ये तु काकिनीं पीतां मेदोदेवीं चतुर्मुखीम् ॥
नाभिस्थाने दशदले मणिपूराभिधाम्बुजे ।
दशवर्णान् डादिफान्तान् डामर्याद्याश्च देवताः ॥

मध्ये तु लाकिनीं रक्तां त्रिमुखीं मांसदेवताम् ।
द्वादशच्छदने पद्मे हृदयेऽनाहताभिधे ॥
कादि ठान्तान् द्वादशार्णान् कालरात्र्यादि देवताः ।
मध्ये तु राकिनीं श्यामां द्विमुखीं रक्तदेवताम् ॥
कण्ठे विशुद्धिचक्राख्ये षोडशच्छदनेऽम्बुजे ।
षोडशार्णानकाराद्यान् अमृताद्याश्च देवताः ॥
मध्ये तु डाकिनीमेकमुखीं त्वगभिमानिनीम् ।
आज्ञापद्मे भ्रुवोर्मध्ये दलयुग्मे षडाननाम् ॥
मज्जाभिमानिनीं शुक्लां हाकिनीं परिचिन्तयेत् ।
हंक्षं वर्णद्वयं हंसवती चैव क्षमावती ॥
सहस्रपद्मे कमले सर्ववर्णपरिवृते ।
याकिनीं सर्ववर्णाढ्यां ध्यायेच्छुक्लाभिमानिनीम् ।
तदन्तः कर्णिकाचन्द्रे ब्रह्मज्योतिर्विचिन्तयेत् ॥

ततः हुं इति मन्त्रेण कुण्डलिनीं स्वेच्छादण्डाहतां कृत्वा सुषुम्णावर्त्मना मूलाधाराद्यना-हतान्तं चक्रस्थवर्णवर्णाधिदेवता ग्रसन्तीं हृदयकमलमानीय तया हंस इति मन्त्रेण कवलीकृतं जीवात्मानं ध्यायन् सुषुम्णावर्त्मनैव विशुद्ध्यादिचक्रस्थवर्णवर्णाधिदेवता ग्रसन्तीं ब्रह्मरन्ध्रं नीत्वा तत्रत्य-सहस्रारपद्मकर्णिकामध्यवर्तिनि परमात्मज्योतिषि सर्ववर्णदेवताकदम्बकं जीवात्मानं च सोऽहमिति मन्त्रेण संयोज्य कुण्डलिनीं पुनः स्वस्थानमानीय तत्त्वानि संहरेत् । यथा । स्योना पृथिवीति मन्त्रस्य मेधातिथये ऋषये नमः । भूम्यै देवतायै नमः । गायत्रीछन्दसे नमः । भूमिमण्डल-शुद्ध्यर्थे जपे विनियोगाय नमः । यथास्थानं न्यस्य ।

"स्योना पृथिवि भवानृक्षरा निवेशनी ।
यच्छा नः शर्म सप्रथः ॥"

इति जप्त्वा । पार्थिवमन्त्रस्य ब्रह्मर्षये नमः । पृथ्व्यै देवतायै नमः । गायत्रीछन्दसे नमः । भूतत्त्वसंहारे विनियोगाय नमः । यथास्थानं न्यस्य । ॐ ह्रां ब्रह्मणे पृथिव्यधिपतये निवृत्तिकलात्मने हुं फट् स्वाहा पञ्चगुणां पृथिवीं षडुद्धातप्रयोगेण अप्सु प्रविलापयामि इति विलापयेत् । अप्सु मे सोमो इत्यस्य मन्त्रस्य मेधातिथये ऋषये नमः । अब्देवताभ्यो नमः । अनुष्टुप्छन्दसे नमः । अम्मण्डलशुद्ध्यर्थे जपे विनियोगाय नमः ।

अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निञ्च विश्वशम्भुवमापश्च विश्वभेषजीः ॥

इति जप्त्वा । वारुणमन्त्रस्य गौतमाय ऋषये नमः । वरुणाय देवतायै नमः । त्रिष्टुप्-छन्दसे नमः । अप्तत्त्वसंहारे विनियोगाय नमः । न्यस्य । ॐ ह्रीं विष्णवे जलाधिपतये प्रतिष्ठा-

कलात्मने हुं फट् स्वाहा चतुर्गुणा आपः पञ्चोद्धातप्रयोगेणाग्नौ प्रविलापयामि । इति विलापयेत् । अग्निं दूतमित्यस्य मन्त्रस्य मेधातिथये ऋषये नमः । अग्नये देवतायै नमः । गायत्रीछन्दसे नमः । अग्निमण्डलशुद्ध्यर्थे जपे विनियोगाय नमः । इति यथास्थानं न्यस्य ।

अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।
अस्य यज्ञस्य सुक्रतुम् ॥

इति जप्त्वा । आग्नेयमन्त्रस्य कश्यपाय ऋषये नमः । अग्नये देवतायै नमः । गायत्रीछन्दसे नमः । अग्नितत्त्वसंहारे विनियोगाय नमः । न्यस्य । ॐ ह्रूं रुद्राय तेजोधिपतये विद्याकलात्मने हुं फट् स्वाहा त्रिगुणमग्निं चतुरुद्धातप्रयोगेण वायौ प्रविलापयामि इति विलापयेत् । आ वात वाहीत्यस्य मन्त्रस्य वामदेवऋषये नमः । वायवे देवतायै नमः । अनुष्टुप्छन्दसे नमः । वायुमण्डलशुद्ध्यर्थे जपे विनियोगाय नमः । न्यस्य ।

आ वात वाहि भेषजं वि वात वाहि यद्रपः ।
त्वं हि विश्वभेषजो देवानां दूत ईयसे ॥

जप्त्वा । वायव्यमन्त्रस्य किष्किन्धाय ऋषये नमः । वायवे देवतायै नमः । वायुतत्त्वसंहारे विनियोगाय नमः । यथास्थानं न्यस्य । ॐ हैं ईश्वराय वाय्वधिपतये शान्तिकलात्मने हुं फट् द्विगुणं वायुं त्रिरुद्धातप्रयोगेणाकाशे प्रविलापयामि । इति विलापयेत् । आदित्प्रत्नस्येति मन्त्रस्य वत्सर्षये नमः । आकाशदेवतायै नमः । गायत्रीछन्दसे नमः । आकाशमण्डलशुद्ध्यर्थे जपे विनियोगाय नमः । न्यस्य ।

आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् ।
परो यदिध्यते दिवा ॥

इति जप्त्वा । आकाशमन्त्रस्य ब्रह्मणे ऋषये नमः । महाकाशाय देवतायै नमः । गायत्र्यै छन्दसे नमः । आकाशतत्त्वसंहारे विनियोगाय नमः । न्यस्य । ॐ ह्रौं सदाशिवायाकाशाधिपतये शान्त्यतीताकलात्मने हुं फट् स्वाहा । एकगुणमाकाशं ह्युद्धातप्रयोगेणाहङ्कारे प्रविलापयामि, अहङ्कारं महत्तत्त्वे, महत्तत्त्वं प्रकृतौ, प्रकृतिं कुण्डलिन्यां विलाप्य, तां कुण्डलिनीं ललाटमध्यं नीत्वा तत्रत्यबिन्दुशक्तौ, बिन्दुशक्तिं नादशक्तौ, नादशक्तिं परशक्तौ चेत्येतत्सर्वं प्रणवेन विलाप्य ॐ ह्रीं हुं फट् स्वाहा इति तां परशक्तिं परमात्मनि संयोज्य । केवलकुणपेऽवशिष्टे—

वामकुक्षिस्थितं पापपुरुषं कज्जलप्रभम् ।
ब्रह्महत्या शिरःस्कन्धं स्वर्णस्तेयभुजद्वयम् ॥
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ।
तत्संसर्गपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ॥

उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ।
खड्गचर्मधरं क्रूरं कुक्षौ पापं विचिन्तयेत् ॥

इति, दक्षकुक्षौ वा, सञ्चिन्त्य। अस्य श्रीवायुबीजमन्त्रस्य किष्किन्धाय ऋषये नमः। वायवे देवतायै नमः । जगतीछन्दसे नमः । सपापशरीरशोषणे विनियोगाय नमः । यथास्थानं न्यस्य । वामनासारन्ध्रे यं इति वायुबीजं कृष्णवर्णं विचिन्त्य तेन सह ततो यथाश्वासं वायुमापूर्य नाभिकमले षट्कोणं वायुमण्डलं विचिन्त्य तत्र वायुबीजं प्रतिष्ठाप्य, कुम्भकेन षोडशवारमावर्त्य, तदुत्थितेन महावायुना पापपुरुषेण सह स्वकुणपं संशोष्य, तं वायुं दक्षिणनासया विरेचयेत् । अस्य श्रीअग्निबीजमन्त्रस्य कश्यपर्षये नमः । वैश्वानराग्नये देवतायै नमः । गायत्रीछन्दसे नमः । सपापशरीरदाहे विनियोगाय नमः । यथास्थानं न्यस्य । दक्षनासारन्ध्रे रं इत्यग्निबीजं आरक्तं विचिन्त्य । तेन सह ततो वायुमापूर्य मूलाधारे त्रिकोणं वह्निमण्डलं विचिन्त्य तत्राग्निबीजं प्रतिष्ठाप्य । कुम्भकेन चतुःषष्टिवारमावर्तयंस्तदुत्थितेन महावह्निना पापपुरुषेण सह स्वकुणपं दग्ध्वा, तज्जं भस्म सात्त्विकराजसतामसभेदेन श्वेतताम्रकृष्णरूपं राशित्रयं कृत्वा राजसतामसभस्मनी पापपुरुषभस्म च सम्पूर्णं वायुना वामनासया बहिर्दूरे विरेचयेत् । अस्य श्रीपीयूषबीजमन्त्रस्य हिरण्यगर्भाय ऋषये नमः । वरुणाय देवतायै नमः । त्रिष्टुप्छन्दसे नमः । भस्मप्लावने विनियोगाय नमः । न्यस्य । वामनासारन्ध्रे वं इति पीयूषबीजं श्वेततरं सञ्चिन्त्य तेन सह तद्द्वारा वायुमापूर्य ब्रह्मरन्ध्रे चन्द्रमण्डलं सञ्चिन्त्य तस्मिन् अमृतबीजं प्रतिष्ठाप्य द्वात्रिंशद्वारमावर्तयंस्तन्निःसृतामृतधारासारेण सात्त्विकभस्मराशिमाप्लाव्य वायुं दक्षनासया विरचयेत् । अस्य श्रीपार्थिवबीजमन्त्रस्य ब्रह्मर्षये नमः । पृथिव्यै देवतायै नमः । गायत्रीछन्दसे नमः । भस्मघनीकारे विनियोगाय नमः । यथास्थानं न्यस्य । दक्षनासारन्ध्रे लं इति पृथ्वीबीजं पीतवर्णं सञ्चिन्त्य तेन सह तद्द्वारा वायुमापूर्य मूलाधारे चतुष्कोणं पार्थिवमण्डलं विचिन्त्य तत्र पार्थिवबीजं प्रतिष्ठाप्य कुम्भकेन यथेच्छमावर्तयंस्तदुद्भूतेन तेजसाऽमृतप्लावितं भस्म देहनिर्माणक्षमं घनीकृत्य वायुं वामनासया विरेचयेत् । ग्लौं इति मन्त्रेण **केचित्** घनीभावमिच्छन्ति । अस्य श्रीशक्तिबीजमन्त्रस्य शक्त्यै ऋषये नमः । संविदे देवतायै नमः । गायत्रीछन्दसे नमः । देहनिष्पादने विनियोगाय नमः । यथास्थानं न्यस्य । वामनासारन्ध्रे स्फुरद्बालार्कवर्णं शक्तिबीजं विचिन्त्य तेन सह तत्पथेन वायुमापूर्य मूलाधारस्थबिन्दौ प्रतिष्ठाप्य यथेच्छमावर्तयंस्तेन करचरणादिनिखिलावयवसमेतं स्वदेहं निष्पन्नं विभाव्य तं वायुं दक्षनासया विरेचयेत् । इह वाय्वादिबीजपञ्चकस्यादौ तैरेव बीजैः प्राणायामं अन्ते यां यीं इत्यादिभिः षड्दीर्घैः पार्थक्येन षडङ्गन्यासानपि **केचिदूचिरे** । ततः सहस्रारपद्मस्थपरमात्मनः सकाशात् सकलजगत्सिसृक्षाविजृम्भितपरब्रह्मेच्छानुरूपिणीं परशक्तिं ॐ ह्रीं नमः इति मन्त्रेण प्रकटितां विभाव्य, ततो नादशक्तिं प्रणवेन ततो बिन्दुशक्तिं च सृष्ट्वा, ततः सकलजगत्सृष्टिहेतुभूतां कुण्डलिनीं प्रणवेनैव निःसार्य, ततः प्रकृतिं, प्रकृतेर्महत्तत्त्वं महत्तत्त्वादहङ्कारं च प्रलापेनैव सृष्ट्वा, ॐ हौं सदाशिवायाकाशाधि-

पतये शान्त्यतीताकलात्मने नमः इत्यहङ्कारादाकाशमुत्पाद्य तत्स्थाने स्थापयेत्। ॐ हैं ईश्वराय वाय्वधिपतये शान्तिकलात्मने नमः इत्याकाशाद्वायुमुत्पाद्य तत्स्थाने स्थापयेत्। ॐ हूं रुद्राय तेजोऽधिपतये विद्याकलात्मने नमः इति वायोरग्निमुत्पाद्य यथास्थानं स्थापयेत्। ॐ ह्रीं विष्णवे जलाधिपतये प्रतिष्ठाकलात्मने नमः इत्यग्नेरप उत्पाद्य अपां स्थाने स्थापयेत्। ॐ ह्रां ब्रह्मणे पृथिव्यधिपतये निवृत्तिकलात्मने नमः इत्यद्भ्यः पृथिवीमुत्पाद्य जान्वादिपादान्तं स्थापयेत्। ततः प्रणवेन कुण्डलिनीं स्वस्थाने निक्षिप्य नादबिन्दुपरशक्तीनां स्वदेहे सर्वतो व्याप्तिं विभाव्य पुनः कुण्डलिनीं ब्रह्मरन्ध्रं नीत्वा तया सोऽहं इति मन्त्रेण परमात्मनः सकाशात् जीवात्मानं संहृतवर्णवर्णाधिदेवतासहितं निःसार्य सुषुम्णामार्गेण सहस्राराज्ञादिचक्रेषु तत्तद्वर्णान् वर्णाधिदेवताः स्थापयन् हृदयकमलमानीय तत्र हंसः इति मन्त्रेण जीवात्मानं संस्थाप्य पुनर्मणिपूरकादिचक्रेषु तत्तद्वर्णवर्णाधिदेवताः स्थापयन् मूलाधारं नीत्वा तत्र यथापूर्वं तामवस्थाप्य, स्वशरीरं निरस्तसकलकलुषं तेजोरूपं देवताराधनयोग्यं विभावयेत्।

**॥ इति भूतशुद्धिः ॥**

एतावत्कर्तुमशक्तश्चेत् लं वं रं यं हं इति पाञ्चभौतिकबीजानां ऋष्यादीन् विन्यस्याविन्यस्यैव वा क्रमेण व्युत्क्रमेण वा उक्तान्यतमरीत्या प्राणायामत्रयं कुर्यात्। अथवा किमप्यकृत्वा पञ्चभूतबीजानि कुम्भके सकृदावर्तयेत्।

**॥ इति रहस्यभूतशुद्धिः ॥**

**॥ अथ प्राणप्रतिष्ठा ॥**

आं ह्रीं क्रों इति प्राणानायम्य। अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुशिवेभ्यः ऋषिभ्यो नमः शिरसि। ऋग्यजुःसामभ्यश्छन्दोभ्यो नमः मुखे। सृष्टिस्थित्यन्तकारिण्यै प्राणशक्त्यै परायै देवतायै नमः हृदये। आं बीजाय नमः गुह्ये। ह्रीं शक्तये नमः पादयोः। क्रों कीलकाय नमः नाभौ। सर्वाङ्गे व्यापकं वा। प्राणप्रतिष्ठापने विनियोगाय नमः करसम्पुटे।

ॐ आं ह्रीं क्रों ह्रां अं कं खं गं घं ङं आकाशवायुतेजोजलपृथिव्यात्मने आं अङ्गुष्ठाभ्यां नमः।

ॐ आं ह्रीं क्रों ह्रीं इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने ईं तर्जनीभ्यां नमः।

ॐ आं ह्रीं क्रों ह्रैं उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं मध्यमाभ्यां नमः।

ॐ आं ह्रीं क्रों ह्रैं एं तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मने ऐं अनामिकाभ्यां नमः।

ॐ आं ह्रीं क्रों ह्रौं ओं पं फं बं भं मं वचनादानगमनविसर्गात्मने औं कनिष्ठिकाभ्यां नमः।

ॐ आं ह्रीं क्रों ह्रः अं यं रं लं वं शं षं सं हं ळं क्षं मनोबुद्ध्यहङ्कारचित्तचैतन्यात्मने अः करतलकरपृष्ठाभ्यां नमः।

एवं हृदयादि। आं नमः नाभ्यादिपादपर्यन्तम्। ह्रीं नमः हृदयादिनाभ्यन्तम्। क्रों नमः मूर्धादिहृदयान्तम्। अथ हृदयकमले—यं त्वगात्मने नमः मध्ये। रं रक्तात्मने नमः पूर्वदले। लं मांसात्मने नमः पश्चिमदले। वं मेद आत्मने नमः आग्नेयदले। शं अस्थ्यात्मने नमः वायव्यदले। षं मज्जात्मने नमः ईशानदले। सं शुक्रात्मने नमः नैर्ऋत्यदले। हं प्राणात्मने नमः उत्तरदले। ळं जीवात्मने नमः दक्षिणदले। क्षं परमात्मने नमः मध्ये।

॥ इति न्यासः ॥

॥ अथ ध्यानम् ॥

रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमणिगुणमप्यङ्कुशं पञ्चबाणान्।
बिभ्राणाऽसृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकारी प्राणशक्तिः परा नः॥

इति ध्यात्वा पञ्चोपचारैर्मनसाऽभ्यर्च्य। हृदि शिरसि वा हस्तं निधाय त्रिः सकृद्वा मन्त्रं पठेत्।

"आं ह्रीं क्रों यं रं लं वं शं षं सं हों ॐ क्षं सं हं सः—ह्रीं ॐ हं सः (२०) मम प्राणा इह प्राणाः।

(२०) मम जीव इह स्थितः।

(२०) मम सर्वेन्द्रियाणि।

(२०) मम वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा—
ॐ क्षं सं हं सः ह्रीं ॐ।

॥ इति प्राणप्रतिष्ठा ॥

एतावदशक्तौ न्यासादिकमकृत्वैव हृदि हस्तं दत्त्वा "आं सो हं" इति त्रिः पठेत्॥

ततः। पञ्चदशवारं प्रणवमावर्तयन् गर्भाधानं, पुंसवनं, सीमन्तोन्नयनं, जातकर्म, नामकरणं, निष्क्रमणं, अन्नप्राशनं, चौलमुपनयनं वेदव्रतानां चतुष्टयं समावर्तनमुद्वाहश्चेति स्वशरीरे पञ्चदश संस्कारान् भावयेत्।

स्वरैः पूरकः कादिवर्गपञ्चकेन कुम्भकः यादिदशवर्णै रेचकः, इति त्रिः प्राणानायम्य।

अस्य श्रीशुद्धमातृकान्यासमन्त्रस्य ब्रह्मर्षये नमः शिरसि। गायत्रीछन्दसे नमः मुखे। मातृकासरस्वतीदेवतायै नमः हृदये। हल्भ्यो बीजेभ्यो नमः गुह्ये। स्वरेभ्यः शक्तिभ्यो नमः पादयोः। बिन्दुभ्यः कीलकेभ्यो नमः नाभौ। सर्वाङ्गे व्यापकं वा। शुद्धमातृकान्यासे विनियोगाय नमः करसम्पुटे। न्यस्य।

अं दक्षकरतलाय नमः। आं दक्षकरपृष्ठाय नमः। इं दक्षकरमाय नमः। ईं दक्षिणाङ्गुष्ठाय नमः। उं दक्षिणतर्जन्यै नमः। ऊँ दक्षिणमध्यमायै नमः। ऋं दक्षानामिकायै नमः। ॠं दक्षकनिष्ठिकायै नमः। ऌं वामकनिष्ठिकायै नमः। ॡं वामानामिकायै नमः। एं वाममध्यमायै नमः। ऐं वामतर्जन्यै नमः। ओं वामाङ्गुष्ठाय नमः। औं वामकरभाय नमः। अं वामकरपृष्ठाय नमः। अः वामकरतलाय नमः।

॥ इति केवलन्यासः ॥

केवलमातृकान्यासोऽपि बिन्दुयुत एव कार्यः इति सत्सम्प्रदायः।

ततः इममेव न्यासं वैपरीत्येन विसर्गाद्यकारान्तं सबिन्दुकमुक्तस्थलेष्वेव कुर्यात्।

॥ इति संहारन्यासः ॥

पुनरपि यथाक्रममेव सविसर्गस्वरान् दक्षादिवामान्तं न्यसेत्।

॥ इति सृष्टिन्यासः ॥

वामकनिष्ठादिवामकरतलान्तमष्टौ ऌकारादीन् स्वरान् विन्यस्य दक्षकरतलादितत्कनिष्ठान्तं अकारादिॠकारान्तान् अष्टौ स्वरान् बिन्दुविसर्गसहितान् न्यसेत्। विसर्गबिन्दुसंयोगे बिन्दुं प्रथमतो वदेत्।

॥ इति स्थितिन्यासः ॥

तं वामकनिष्ठामूलपर्वणे नमः। थं वामकनिष्ठामध्यपर्वणे नमः। दं वामकनिष्ठाग्रपर्वणे नमः। धं वामानामिकामूलपर्वणे नमः। नं वामनामिकामध्यपर्वणे नमः। पं वामनामिकाग्रपर्वणे नमः। फं वाममध्यमामूलपर्वणे नमः। बं वाममध्यमामध्यपर्वणे नमः। भं वाममध्य-

माग्रपर्वणे नमः । मं वामतर्जनीमूलपर्वणे नमः । यं वामतर्जनीमध्यपर्वणे नमः । रं वामतर्जन्यग्रपर्वणे नमः । लं वामाङ्गुष्ठमूलपर्वणे नमः । वं वामाङ्गुष्ठमध्यपर्वणे नमः । शं वामाङ्गुष्ठाग्रपर्वणे नमः ॥ एवमेव ककारादिणकारान्तान् पञ्चदशवर्णान् दक्षहस्तस्य कनिष्ठामूलपर्वाद्यङ्गुष्ठाग्रपर्वान्तं, वामपदस्थाने दक्षपदं न्यस्य न्यसेत् । ततः षं अङ्गुष्ठाभ्यां नमः इत्यादि क्षं कनिष्ठिकाभ्यां नमः इति न्यसेत् ।

## ॥ इति करशुद्धिः ॥

ॐ अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः । ॐ इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः । ॐ उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः । ॐ एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः । ॐ ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः । ॐ अं यं रं लं वं शं षं सं हं ळं क्षं अः करतलकरपृष्ठाभ्यां नमः । एवं हृदयादि ।

## ॥ अथ सूक्ष्ममातृकाध्यानम् ॥

व्योमेन्दौ रसनार्णकर्णिकमचां द्वन्द्वैः स्फुरत्केसरं,<br>
पत्रान्तर्गतपञ्चवर्गयशलार्णादित्रिवर्गं क्रमात् ।<br>
आशास्वश्रिसु लातलाङ्गलियुगक्षोणीपुरेणावृतम्,<br>
वर्णाब्जं शिरसि स्थितं विषगदप्रध्वंसि मृत्युञ्जयम् ॥ १ ॥

इति ब्रह्मरन्ध्रे वर्णारविन्दं ध्यात्वा—

मूलाधाराद् ध्वनिं श्रुत्वा प्रबुद्धा शक्तिकुण्डली ।<br>
ज्वलत्पावकसङ्काशा सूक्ष्मा तेजःस्वरूपिणी ॥

मूलाधाराच्छिरःपद्मं स्पृशन्ती विद्युदाकृतिः ।<br>
तया स्पृष्टशिरःपद्मादमृतौघस्वरूपिणः ॥

निर्गतान् मातृकावर्णान् सुषुम्णावर्त्मना तनुम् ।<br>
व्यापयित्वा स्थितान् सर्वान् एवं ध्यात्वा प्रविन्यसेत् ॥

विशुद्धिपद्ममूर्ध्वमुखं ध्यात्वा प्रागादिप्रादक्षिण्येन "अं नमः हंसः सोऽहं" इति मन्त्रान् अकारादिविसर्गान्तस्वरसहितान् षोडश न्यसेत् । एवमनाहते ककारादिठकारान्तवर्णसहितान् द्वादश । मणिपूरे डकारादिफकारान्तवर्णसहितान् दश । स्वाधिष्ठाने प्रथमदलत्रये बं नमः भं नमः मं नमः इति न्यस्य । ततः षट्स्वपि दलेषु "हंसः सोऽहं" इति मन्त्रशेषं न्यस, चरमदलत्रये यं नमः रं नमः लं नमः, इति न्यसेत् । मूलाधारे वं नमः शं नमः षं नमः सं नमः इति न्यस्य "हंसः सोऽहं" इति शेषं ततो न्यसेत् । आज्ञाचक्रे हं नमः हंसः सोऽहम् ।

क्षं नमः हंसः सोऽहम् । इति न्यसेत् । ततः सत्यवकाशे सहस्रारपत्रेष्वपि इत्थं न्यसेत् । ळकारत्यागेन पञ्चाशन्मातृकाणां क्रमोत्क्रमाभ्यां अकारादि अकारान्ताः शतं वर्णाः । तेषां दशावृत्तयो दशशतेषु ऊर्ध्वसंस्थं कार्याः । सर्वत्र तत्त्वार्थयोग आवश्यकः । तत्त्वार्थयोगं अज्ञानतो न कुर्वन्ति बह्वः ।

॥ इत्यन्तर्मातृकाः ॥

पूर्ववद् ऋष्यादिन्यासं करषडङ्गं हृदादिषडङ्गं कृत्वा, अकृत्वैव वा, वर्णारविन्दे स्थूलमातृकां ध्यायेत्—

पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादयुक् कुक्षिवक्षो-
देशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् ।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणामब्जसंस्थाम्,
अच्छाऽऽकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥

दक्षोर्ध्वकरमारभ्य दक्षाधः करपर्यन्तं आयुधध्यानम् । ह्सौः अं आं ५१ स्हौः नमः इति मूर्धादिपादान्तं त्रिर्व्यापकं न्यस्य । क्षं हृदयान्मस्तकपर्यन्ताय नमः । ळं हृदयान्नाभिपर्यन्ताय नमः । हं हृदयाद्वामपादपर्यन्ताय नमः । सं हृदयाद्दक्षिणपादपर्यन्ताय नमः । षं हृदयादिवामबाहुपर्यन्ताय नमः । शं हृदयादिदक्षिणबाहुपर्यन्ताय नमः । वं वामांसाय नमः । लं ककुदे नमः । रं दक्षिणांसाय नमः । यं हृदयाय नमः । मं उदराय नमः । भं नाभ्यै० । बं पृष्ठाय० । फं वामपार्श्वाय० । पं दक्षिणपार्श्वाय० । नं वामपादाङ्गुल्यग्रेभ्यो० । धं वामपादाङ्गुलिमूलेभ्यो० । दं वामगुल्फाय० । थं वामजानुने० । तं वामपादमूलाय० । णं दक्षिणपादाङ्गुल्यग्रेभ्यो० । ढं दक्षिणपादाङ्गुलिमूलेभ्यो० । डं दक्षिणगुल्फाय० । ठं दक्षिणपादजानुने० । टं दक्षिणपादमूलाय० । ञं वामहस्ताङ्गुल्यग्रेभ्यो० । झं वामहस्ताङ्गुलिमूलेभ्यो० । जं वाममणिबन्धाय० । छं वामकूर्पराय० । चं वामबाहुमूलाय० । ङं दक्षिणहस्ताङ्गुल्यग्रेभ्यो० । घं दक्षिणहस्ताङ्गुलिमूलेभ्यो० । गं दक्षिणमणिबन्धाय० । खं दक्षिणकूर्पराय० । कं दक्षिणबाहुमूलाय० । अः तालुने० । अं ब्रह्मरन्ध्राय० । औं अधरदन्तेभ्यो० । ओं ऊर्ध्वदन्तेभ्यो० । ऐं अधरोष्ठाय० । एं ऊर्ध्वोष्ठाय० । ॡं वामकपोलाय० । ऌं दक्षिणकपोलाय० । ॠं वामनासापुटाय० । ऋं दक्षनासापुटाय० । ऊं वामकर्णाय० । उं दक्षकर्णाय० । ईं वामनेत्राय० । इं दक्षनेत्राय० । आं मुखवृत्ताय० । अं ललाटाय नमः ।

॥ इति संहारन्यासः ॥

एष्वेव स्थानेष्वकारादिक्षकारान्तान् सविसर्गान्न्यसेत् ।

॥ इति सृष्टिन्यासः ॥

पुनरपि डकारादिठकारान्तान् तेष्वेव स्थानेषु बिन्दुविसर्गोभययुक्तान् न्यसेत् ।

॥ इति स्थितिन्यासः ॥

एतान् न्यासान् पूर्वोक्तरीत्या तत्तद्विशेषमुद्रया कनिष्ठाङ्गुष्ठयोगरूपसामान्यमुद्रया वा कुर्यात् ।

एतावदशक्तस्तु ऋष्यादित्रयं सकृन्न्यस्य विशुद्धिचक्रादिन्यासं, सृष्टिन्यासं च बिन्दुयोगेन कुर्यात् । तत्राप्यशक्तौ, अञ्जलिं बद्ध्वा मातृकाः पठन् अञ्जल्यन्तर्गता विभाव्य मूर्धादिव्यापकं त्रिर्न्यसेत् ।

॥ इति मातृकान्यासः ॥

श्री उद्यन्नद्येति तृचस्य कण्वपुत्रः प्रस्कण्वऋषिः । सूर्यो देवता, अनुष्टुप् छन्दः, अङ्गशुद्धौ विनियोगः । इति स्मृत्वा । "उद्यन्नद्य मित्रमह०" "ते रधं" इति सोदकेन पाणिना अङ्गान्यभिमृश्य । गुरुभ्यो नमः । परमगुरुभ्यो नमः । परात्परगुरुभ्यो नमः । तृचस्य कण्वपुत्राय प्रस्कण्वाय ऋषये नमः शिरसि । अनुष्टुप्छन्दसे नमः मुखे । सर्वरोगापहर्त्रे जगदात्मने श्रीसूर्याय देवतायै नमः हृदये । ह्रां बीजाय नमः गुह्ये । ह्रीं शक्तये नमः पादयोः । श्रीं कीलकाय नमः नाभौ । उदात्तस्वराय नमः कण्ठे । ज्ञाननेत्राय नमः नाभौ । सूर्यतत्त्वाय नमः नाभौ । द्वादशाङ्गादिन्यासेषु विनियोगाय नमः करसम्पुटे । न्यसेत् ।

॥ इति ऋष्यादिन्यासः ॥

ॐ ह्रीं श्रीं ॐ ह्रां उद्यन्नद्य मित्रमहः दक्षिणहस्ताय नमः प्रतिषिद्धकरणान्मित्रो रक्षतु माम् । ॐ ह्रीं श्रीं ॐ (४) ह्रीं आरोहन्नुत्तरां दिवं वामहस्ताय नमः विहिताकरणाद्रवी रक्षतु माम् । ४ ह्रूं हृद्रोगं मम सूर्य हृदयाय नमः सूर्यो ज्ञानाद्रक्षत्वनामयं करोतु माम् । ४ ह्रैं हरिमाणं च नाशय मूर्ध्ने नमः भानुः सर्वभूतेभ्यो रक्षतु माम् । ४ ह्रौं शुकेषु मे हरिमाणं दक्षिणपादाय नमः प्रतिषिद्धगमनात्खगो रक्षतु माम् । ४ ह्रः रोपणाका सुदध्मसि वामपादाय नमः विहितागमनात्पूषा रक्षतु माम् । ४ ह्रां अथो हारिद्रवेषु मे नाभ्यै नमः तमोजाड्याद्धिरण्यगर्भो रक्षतु माम् । ४ ह्रीं हरिमाणं निदध्मसि जिह्वायै नमः प्रतिषिद्धसर्वजिह्वाव्यापारान्मरीची रक्षतु माम् । ४ ह्रूं उदगादयमादित्यो दक्षिणनेत्राय नमः प्रतिषिद्धेक्षणादादित्यो रक्षतु माम् । ४ ह्रैं विश्वेन सहसा सह वामनेत्राय नमः विहितानिरीक्षणात्सविता रक्षतु माम् । ४ ह्रौं द्विषन्तं मह्यं रन्धयन् कवचाय हुं त्वग्रोगादर्को रक्षतु माम् । ४ ह्रः मो अहं द्विषते रधं अस्त्राय फट् दिग्विदिग्भ्यो भास्करो रक्षतु माम् ।

॥ इति द्वादशाङ्गन्यासः ॥

## ॥ अथ सप्तषडङ्गी ॥

(१) ॐ ह्रां उद्यन्नद्य० मित्राय नमः अङ्गुष्ठाभ्यां नमः। ॐ ह्रीं आरोहन्नु० रवये नमः तर्जनीभ्यां नमः। ॐ ह्रूं हृद्रोगं० सूर्याय नमः मध्यमाभ्यां नमः। ॐ ह्रैं हरिमाणं० भानवे नमः अनामिकाभ्यां नमः। ॐ ह्रौं शुकेषु मे० खगाय नमः कनिष्ठिकाभ्यां नमः। ॐ ह्रः रोपणाका० पूष्णे नमः करतलकरपृष्ठाभ्यां नमः। ॐ ह्रां अथो हारिद्र० हिरण्यगर्भाय नमः हृदयाय नमः। ॐ ह्रीं हरिमाणं० मरीचये नमः शिरसे स्वाहा। ॐ ह्रूं उदगादय० आदित्याय नमः शिखायै वषट्। ॐ ह्रैं विश्वेन सह० सवित्रे नमः कवचाय हुम्। ॐ ह्रौं द्विषन्तं मह्यं० अर्काय नमः नेत्रत्रयाय वौषट्। ॐ ह्रः मो अहं भास्कराय नमः अस्त्राय फट्॥

## ॥ इति पादषडङ्गन्यासः ॥

(२) ॐ श्रां उद्यं० दिवं मित्ररविभ्यां नमः अङ्गुष्ठाभ्यां नमः। ॐ श्रीं हृद्रोगं० नाशय सूर्यभानुभ्यां नमः तर्जनीभ्यां नमः। ॐ श्रूं शुकेषु मे० ध्मसि खगपूषभ्यां नमः मध्यमाभ्यां नमः। ॐ श्रैं अथो हारि० निदध्मसि हिरण्यगर्भमरीचिभ्यां नमः अनामिकाभ्यां नमः। ॐ श्रौं उदगादय० सह आदित्यसवितृभ्यां नमः कनिष्ठिकाभ्यां नमः। ॐ श्रः द्विषन्तं० रधं अर्कभास्कराभ्यां नमः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः।

## ॥ इत्यर्धर्चषडङ्गन्यासः ॥

(३) ॐ ह्रां उद्यन्न० नाशय मित्ररविसूर्यभानुभ्यो नमः अङ्गुष्ठाभ्यां नमः। ॐ ह्रीं शुकेषु मे० निदध्मसि खगपूषहिरण्यगर्भमरीचिभ्यो नमः तर्जनीभ्यां नमः। ॐ ह्रूं उदगादय० रधं आदित्यसवित्रर्कभास्करेभ्यो नमः मध्यमाभ्यां नमः। ॐ ह्रैं उद्यन्नद्य० नाशय मित्ररविसूर्यभानुभ्यो नमः अनामिकाभ्यां नमः। ॐ ह्रौं शुकेषु० निदध्मसि खगपूषहिरण्यगर्भमरीचिभ्यो नमः कनिष्ठिकाभ्यां नमः। ॐ ह्रः उदगादय० रधं आदित्यसवित्रर्कभास्करेभ्यो नमः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः।

## ॥ इति ऋक्षडङ्गन्यासः ॥

(४) ॐ ह्रां अङ्गुष्ठाभ्यां नमः। ॐ ह्रीं तर्जनीभ्यां०। ॐ ह्रूं मध्यमाभ्यां०। ॐ ह्रैं अनामिकाभ्यां०। ॐ ह्रौं कनिष्ठिकाभ्यां०। ॐ ह्रः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादि।

## ॥ इति बीजषडङ्गन्यासः ॥

(५) ॐ मित्ररविभ्यां नमः अङ्गुष्ठाभ्यां नमः। ॐ सूर्यभानुभ्यां नमः तर्जनीभ्यां०। ॐ खगपूषभ्यां नमः मध्यमाभ्यां०। ॐ हिरण्यगर्भमरीचिभ्यां नमः अनामिकाभ्यां०। ॐ आदित्यसवितृभ्यां नमः कनिष्ठिकाभ्यां०। ॐ अर्कभास्कराभ्यां नमः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादि॥

**॥ इति नामषडङ्गन्यासः॥**

(६) ॐ हं सां अङ्गुष्ठाभ्यां नमः। ॐ हं सीं तर्जनीभ्यां०। ॐ हं सूं मध्यमाभ्यां०। ॐ हं सैं अनामिकाभ्यां०। ॐ हं सौं कनिष्ठिकाभ्यां०। ॐ हं सः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादि।

**॥ इति हंसषडङ्गन्यासः॥**

(७) ॐ ह्रीं श्रीं ॐ सत्यतेजसे ज्वलज्ज्वालामालिने मणिकुम्भाय हुं फट् स्वाहा अङ्गुष्ठाभ्यां नमः। ॐ ह्रीं श्रीं ॐ ब्रह्मतेजसे ज्वलज्ज्वालामालिने मणिकुम्भाय हुं फट् स्वाहा तर्जनीभ्यां नमः। ४ विष्णुतेजसे ज्वलज्ज्वाला० स्वाहा मध्यमाभ्यां नमः। ४ रुद्रतेजसे ज्वलज्ज्वाला० स्वाहा अनामिकाभ्यां नमः। ४ अग्नितेजसे ज्वलज्ज्वाला० स्वाहा कनिष्ठिकाभ्यां नमः। ४ सर्वतेजसे ज्वलज्ज्वाला० स्वाहा करतलकरपृष्ठाभ्यां नमः। एवं हृदयादि। क्वचिदेतेषु मन्त्रेषु कुम्भाय इत्यक्षरत्रयं न पठ्यते।

**॥ इति मणिकुम्भषडङ्गन्यासः॥**

**॥ इति सप्तषडङ्गी॥**

ॐ भास्कराय नमः शिखायै नमः। ॐ रवये नमः ललाटाय नमः। ॐ भानवे नमः भ्रूमध्याय नमः। ॐ जगच्चक्षुषे नमः चक्षुर्भ्यां नमः। ॐ खगाय नमः मुखाय नमः। ॐ भानुमते० कण्ठाय०। ॐ तिमिरनाशनाय० स्तनाभ्यां०। ॐ जातवेदसे० नाभ्यै०। ॐ कालात्मने० कट्यै०। ॐ उग्ररूपाय० गुह्याय०। ॐ तेजोरूपाय० जङ्घाभ्यां०। ॐ रक्षोविनाशाय० गुल्फाभ्यां०। ॐ सूक्ष्मगणपतये० दक्षिणपादाय०। ॐ स्थूलगणपतये० वामपादाय नमः।

**॥ इति नामन्यासः॥**

ॐ अर्काय नमः मूर्ध्ने नमः। ॐ रवये नमः ललाटाय नमः। ॐ सूर्याय० नेत्राभ्यां०। ॐ दिवाकराय० कर्णाभ्यां०। ॐ भानवे० नासिकायै०। ॐ भास्कराय० मुखाय०। ॐ

पर्जन्याय० ओष्ठाभ्यां० । ॐ तीक्ष्णाय० जिह्वायै० । ॐ सुवर्णरेतसे० कण्ठाय० । ॐ तिग्मतेजसे० स्कन्धाय० । ॐ पूष्णे० बाहुभ्यां० । ॐ मित्राय० पृष्ठाय० । ॐ अरुणाय० दक्षिणहस्ताय० । ॐ त्वष्ट्रे० वामहस्ताय० । ॐ घृणये० हस्ताङ्गुलिभ्यो० । ॐ भानुमते० हृदयाय० । ॐ यमाय० उदराय० । ॐ आदित्याय० नाभ्यै० । ॐ हंसाय० कट्यै० । ॐ रुद्राय० ऊरुभ्यां० । ॐ गोपतये० जानुभ्यां० । ॐ सवित्रे० जङ्घाभ्यां० । ॐ विवस्वते० गुल्फाभ्यां० । ॐ प्रभाकराय० पादाभ्यां० । ॐ तमोध्वंसिने० बाह्याङ्गाय० । ॐ खगाय० अभ्यन्तराङ्गाय० । ॐ सहस्रांशवे नमः सर्वाङ्गेभ्यो नमः । ॐ भगाय नमः दिग्विदिग्भ्यो नमः ।

॥ इति कवचन्यासः ॥

ॐ "उद्यन्नद्य० दिवं" ह्रां शिरसे नमः । ॐ हृद्रोगं० नाशय ह्रीं मुखाय नमः । ॐ "शुकेषु मे० सुदध्मसि" ह्रूं हृदयाय नमः । ॐ 'अथो हारिद्र० निदध्मसि' ह्रैं नाभ्यै नमः । ॐ 'उदगा० सह" ह्रौं जानुभ्यां नमः । ॐ "द्विषन्तं मह्यं० रधं" ह्रः पादाभ्यां नमः ।

॥ इति देहाङ्गन्यासः ॥

ॐ उं शिखायै नमः । ॐ द्यं ब्रह्मरन्ध्राय नमः । ॐ नं ललाटाय० । ॐ द्यं मुखाय० । ॐ मिं दक्षिणनेत्राय० । ॐ त्रं वामनेत्राय० । ॐ मं दक्षिणगण्डाय० । ॐ हं वामगण्डाय० । ॐ आं दक्षिणकर्णाय० । ॐ रों वामकर्णाय० । ॐ हं दक्षिणभ्रुवे । ॐ न्नुं वामभ्रुवे० । ॐ त्तं भ्रूमध्याय० । ॐ रां दक्षिणनासिकायै० । ॐ दिं वामनासिकायै० । ॐ वं ऊर्ध्वोष्ठाय० । ॐ हृं अधरोष्ठाय० । ॐ द्रों ऊर्ध्वदन्तपङ्क्तये० । ॐ गं अधोदन्तपङ्क्तये० । ॐ मं जिह्वायै० । ॐ मं तालुने । ॐ सूं उपजिह्विकायै० । ॐ रिं दक्षिणस्कन्धाय० । ॐ यं वामस्कन्धाय० । ॐ हं दक्षभुजमूलाय० । ॐ रिं वामभुजमूलाय० । ॐ मां दक्षभुजाय० । ॐ णं वामभुजाय० । ॐ चं दक्षिणकूर्पराय० । ॐ नां वामकूर्पराय० । ॐ शं दक्षिणमणिबन्धाय० । ॐ यं वाममणिबन्धाय० । ॐ शुं दक्षिणहस्ताय० । ॐ कें वामहस्ताय० । ॐ षुं दक्षिणहस्ताङ्गुष्ठाय० । ॐ में वामहस्ताङ्गुष्ठाय० । ॐ हं दक्षिणहस्ततर्जन्यै० । ॐ रिं वामहस्ततर्जन्यै० । ॐ मां दक्षिणहस्तमध्यमायै० । ॐ णं वामहस्तमध्यमायै० । ॐ रों दक्षिणहस्तानामिकायै० । ॐ पं वामहस्तानामिकायै । ॐ णां दक्षिणहस्तकनिष्ठिकायै० । ॐ कां वामहस्तकनिष्ठिकायै० । ॐ सुं दक्षिणहस्तनखाग्रपङ्क्तये० । ॐ दं वामहस्तनखाग्रपङ्क्तये नमः । ॐ ध्मं दक्षिणकरतलाय० । ॐ सिं वामकरतलाय० । ॐ अं दक्षिणकरपृष्ठाय० । ॐ थों वामकरपृष्ठाय० । ॐ हां ऊर्ध्वकण्ठाय० । ॐ रिं अधःकण्ठाय० । ॐ द्रं घण्टिकायै० । ॐ वें दक्षस्तनाय० । ॐ षुं वामस्तनाय० । ॐ मैं

हृदयाय०। ॐ हं दक्षिणपार्श्वाय०। ॐ रिं वामपार्श्वाय०। ॐ मां जठराय०। ॐ णं पृष्ठाय०। ॐ निं नाभ्यै०। ॐ दं गुह्याय०। ॐ धमं दक्षिणजानुने०। ॐ सिं वामजानुने०। ॐ उं दक्षिणजङ्घायै०। ॐ दं वामजङ्घायै०। ॐ गां दक्षिणगुल्फाय०। ॐ दं वामगुल्फाय०। ॐ यं दक्षिणपादाय०। ॐ मां वामपादाय। ॐ दिं दक्षिणपादाङ्गुष्ठाय०। ॐ त्यों वामपादाङ्गुष्ठाय०। ॐ विं दक्षिणपादतर्जन्यै०। ॐ श्वें वामपादतर्जन्यै०। ॐ नं दक्षिणपादमध्यमायै०। ॐ सं वामपादमध्यमायै०। ॐ हं दक्षिणपादानामिकायै०। ॐ सां वामपादानामिकायै०। ॐ सं दक्षिणपादकनिष्ठिकायै०। ॐ हं वामपादकनिष्ठिकायै०। ॐ द्विं दक्षिणपादनखाग्रपङ्क्तये०। ॐ षं वामपादनखाग्रपङ्क्तये०। ॐ तं दक्षिणपादतलाय०। ॐ मं वामपादतलाय०। ॐ ह्यं दक्षिणपादपृष्ठाय०। ॐ रं वामपादपृष्ठाय०। ॐ धं मूलाधारपद्माय०। ॐ यं स्वाधिष्ठानपद्माय०। ॐ न्मों मणिपूरपद्माय०। ॐ अं अनाहतपद्माय०। ॐ हं विशुद्धिपद्माय०। ॐ द्विं आज्ञापद्माय०। ॐ षं सहस्रारपद्माय०। ॐ तें प्राणदशकाय०। ॐ रं इन्द्रियदशकाय०। ॐ धं मनश्चतुष्टयाय नमः॥

॥ इति तृचाक्षरन्यासः॥

ॐ सहस्रशीर्षा० दशाङ्गुलं वामकराय नमः। ॐ पुरुष एवेदं० नातिरोहति दक्षिणकराय०। ॐ एतावान० दिवि वामपादाय०। ॐ त्रिपादूर्ध्व० शने अभि दक्षिणपादाय०। ॐ तस्माद्विराळ० मथो पुरः वामजानुने०। ॐ यत्पुरुषेण० द्धविः दक्षिणजानुने०। ॐ तं यज्ञं बर्हिषि० श्च ये वामकट्यै०। ॐ तस्माद्यज्ञा० ग्राम्याश्च ये दक्षिणकट्यै०। ॐ तस्माद्यज्ञात्सर्वहुत० जायत नाभ्यै०। ॐ तस्मादश्वा० अजावयः हृदयाय०। ॐ यत्पुरुषं० च्येते कण्ठाय०। ॐ ब्राह्मणोऽस्य० च्छूद्रो अजायत वामबाहवे०। ॐ चन्द्रमा० द्वायुरजायत दक्षिणबाहवे०। ॐ नाभ्या आ० ल्पयन् मुखाय०। ॐ सप्तास्या० पुरुषं पशुं भ्रूमध्याय०। ॐ यज्ञेन यज्ञ० सन्ति देवाः शिरोमध्याय०।

॥ इति पुरुषसूक्तन्यासः॥

गुं गुरुभ्यो नमः स्वदक्षिणे। गं गणपतये नमः स्ववामभागे। आं आधारशक्त्यै नमः मूलाधारे। मूं मूलप्रकृत्यै नमः स्वाधिष्ठाने। आं आदिकूर्माय नमः मणिपूरे। वं वराहाय नमः उपर्युपरि। अं अनन्ताय०। पृं पृथिव्यै०। स्वं स्वर्णमण्डलाय०। स्वं स्वर्णवेदिकायै०। रं रत्नसिंहासनाय०। श्वें श्वेतच्छत्राय॥ सिंहासनस्य पार्श्वयोः सिं सितचामराभ्यां०। धं धर्माय नमः दक्षांसे। ज्ञां ज्ञानाय नमः वामांसे। वैं वैराग्याय नमः वामजानुनि। ऐं ऐश्वर्याय नमः दक्षजानुनि। अं अधर्माय० मुखे। अं अज्ञानाय० वामपार्श्वे। अं अवैराग्याय

नमः गुह्ये । अं अनैश्वर्याय नमः दक्षपार्श्वे ॥ अथ सिंहासनस्य चतुर्दिक्षु प्रागादिषु ऋं ऋग्वेदाय० । यं यजुर्वेदाय७ । सां सामवेदाय० । अं अथर्ववेदाय० ॥ सिंहासनस्य आग्नेयादिविदिक्षु । कृं कृतयुगाय० । त्रें त्रेतायुगाय० । द्वां द्वापरयुगाय० । कं कलियुगाय ॥ सिंहासनस्याभितः मं मन्दाराय० । पां पारिजाताय० । सं सन्तानाय० । कं कल्पवृक्षाय० । हं हरिचन्दनाय० ॥ पुनर्हृदय एव सिंहासनादुपर्युपरि० । मूं मूलाय० । कं कन्दाय० । नां नालाय० । पं पद्माय० । पं पत्रेभ्यो० । कें केसरेभ्यो० । कं कर्णिकायै० । अं सूर्यमण्डलाय० । उं सोममण्डलाय० । मं वह्निमण्डलाय० । ब्रं ब्रह्मणे० । विं विष्णवे० । रुं रुद्राय० । सं सत्त्वाय० । रं रजसे० । तं तमसे० । मां मायायै० । विं विद्यायै० । आं आत्मने० । अं अन्तरात्मने० । पं परमात्मने० । ह्रीं ज्ञानात्मने० । भूं भूःपुरुषाय० । भुं भुवःपुरुषाय० । स्वं स्वःपुरुषाय० । भूं भूर्भुवःस्वःपुरुषाय० । अथ पद्मस्य प्रागादि-दलेषु कर्णिकायां च । रां दीप्त्यै० । रीं सूक्ष्मायै० । रूं जयायै० । रें भद्रायै० । रैं विभूत्यै० । रों विमलायै० । रौं अमोघायै० । रं वैद्युतायै० । रः सर्वतोमुख्यै० । सं सप्ततुरग-सहिताय अरुणसारथये नमः । कर्णिकायामेव प्रागाद्यष्टासु दिक्षु मध्ये च । अं अरुणासनाय नमः । प्रं प्रभूतासनाय नमः । विं विभूतासनाय नमः । विं विमलासनाय० । कं कमला-सनाय० । यों योगासनाय० । आं आधारासनाय० । श्रीं श्रीपरमसुखासनाय नमः ।

॥ इति पीठन्यासः ॥

कण्वपुत्राय प्रस्कण्वाय ऋषये नमः शिरसि । अनुष्टुप्छन्दसे नमः मुखे । सर्वरोगा-पहर्त्रे जगदात्मने श्रीसूर्याय देवतायै नमः हृदये । ह्रां बीजाय नमः गुह्ये । ह्रीं शक्तये नमः पादयोः । श्रीं कीलकाय नमः व्यापकम् । उदात्तस्वराय नमः कण्ठे । ज्ञाननेत्राय नमः नाभौ । सूर्यतत्त्वाय नमः नाभौ । द्वादशाङ्गादिन्यासेषु विनियोगाय नमः करसम्पुटे ।

॥ इति ऋष्यादिन्यासः ॥

॥ इति न्यासजालम् ॥

## ॥ अथ पूजा ॥

गुं गुरुभ्यो नमः । गं गणपतये नमः । श्रीसूर्याय नमः । रविं नत्वा । तृचमष्टा-विंशतिवारं, यथाशक्ति वा जप्त्वा । स्वाग्रे स्वनाभिदघ्नं देवतापीठं संस्थाप्य । वर्धनीपात्रं स्थूलं च वामभागे अमन्त्रकं स्थापयेत् । क्षालितमाधारं निधाय तत्र क्षालितां वर्धनीं निक्षिप्य, तां शुद्धोदकैः कर्पूरवासितैरापूर्य, क्षालितेन पिधानेन अपिदध्यात् ।

॥ इति वर्धन्यासादनम् ॥

ततः स्वस्य देवतायाश्च मध्यगामिन्यां तिर्यग्वीथ्यां गोमयेन चन्दनेन चानुलिप्तायां वामभागे गोमयोदकेन मण्डलं निर्माय रक्तचन्दनं रक्ताक्षतांश्च, कलशाधारमण्डलाय नमः इति तत्र निक्षिप्य । द्विषन्तं मह्यं रन्धयन्, मो अहं द्विषते रधं अस्त्राय फट् इत्यस्त्रमन्त्रेण प्रक्षालितं आधारं मण्डले निक्षिप्य । दशकलाव्याप्तवह्निमण्डलाय नमः इति आधारे वह्निमण्डलमभ्यर्च्य, स्वाग्रादि प्रादक्षिण्येन यं धूम्रार्चिषे नमः । रं उष्मायै० । लं ज्वलिन्यै । वं ज्वालिन्यै० । शं विस्फुलिङ्गिन्यै० । षं सुश्रियै० । सं सुरूपायै० । हं कपिलायै० । ळं हव्यवाहायै० । क्षं कव्यवाहायै नमः इति वह्निकलाः सम्पूज्य ॥ द्विषन्तं मह्यं रन्धयन् मो अहं द्विषते रधं अस्त्राय फट् इत्यस्त्रमन्त्रेण कलशं संक्षाल्य, तूष्णीमाधारे संस्थाप्य। उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् हृदयाय नमः इति कलशे गन्धपुष्पाक्षतान् निक्षिपेत् । अं द्वादशकलाव्याप्तसूर्यमण्डलाय नमः इति कलशे सूर्यं सम्पूज्य । स्वाग्रादि प्रादक्षिण्येन तत्कलाः पूजयेत् । कं भं तपिन्यै नमः । खं बं तापिन्यै ममः । गं फं धूम्रायै० । घं पं मरीच्यै० । ङं नं ज्वालिन्यै० । चं धं रुच्यै० । छं दं सुषुम्णायै० । जं थं भोगदायै० । झं तं विश्वायै० । ञं णं बोधिन्यै० । टं ढं धारिण्यै० । ठं डं क्षमायै नमः । ततः क्षं ळं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं ॥५१॥

> इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।
> असिक्निया मरुद्वृधे वितस्तयार्जीकीये श्रृणुह्या सुषोमया ॥

इति कर्पूरादिवासितं तीर्थाद्याहृतं जलं कलशे समापूर्य । उं षोडशकलाव्याप्तसोममण्डलाय नमः । इति जले चन्द्रमभ्यर्च्य तत्कलाः पूजयेत् । अं अमृतायै० । आं मानदायै० । इं पूषायै० । ईं तुष्ट्यै । उं पुष्ट्यै० । ऊं रत्यै० । ऋं धृत्यै० । ॠं शशिन्यै० । ऌं चन्द्रिकायै० । ॡं कान्त्यै० । एं ज्योत्स्नायै० । ऐं श्रियै । ओं प्रीत्यै० । औं अङ्गदायै० । अं पूर्णायै० । अः पूर्णामृतायै नमः ॥

> ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे ।
> तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥

इति सूर्यं प्रार्थ्य, अनुज्ञां लब्ध्वा, क्रों इत्यङ्कुशमुद्रया तीर्थान्याकृष्य—

> सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।
> आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥
> गङ्गे च यमुने चैव गोदावरि सरस्वति ।
> नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥

इति तीर्थानि जले संयोज्य, द्विषन्तं० रधं अस्त्राय फट्० इत्यस्त्रमन्त्रेण चक्रमुद्रया संरक्ष्य। अभ्यर्च्य। धेनुशङ्खपद्मगदागरुडग्रथितयमपाशाङ्कुशमुद्राष्टकं प्रदर्श्य। तत्त्वा यामि, शुनःश्येपो वरुणस्त्रिष्टुप् वरुणावाहने विनियोगः।

तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः।
अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः॥

वरुणमावाहनादिमुद्रया आवाह्य। अभ्यर्च्य। आकलशेषु इत्यस्य पवमानसोमो गायत्री कलशाभिमन्त्रणे विनियोगः।

आकलशेषु धावति, पवित्रे परिषिच्यते।
उक्थैर्यज्ञेषु वर्धते।

इत्यभिमन्त्र्य। मही द्यौर्मेधातिथिर्द्यावापृथिव्यौ गायत्री, सप्तमृत्तिका प्रक्षेपे विनियोगः।

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्।
पितृतान्नो भरीमभिः।

इति सप्तमृत्तिका यथालाभं निक्षिप्य। ओषधयोऽथर्वणो भिषगोषधयोऽनुष्टुप् सर्वौषधिप्रक्षेपे विनियोगः।

ओषधयः संवदन्ते सोमेन सह राज्ञा।
यस्मै कृणोति ब्राह्मणस्तं राजन्पारयामसि॥

इति सर्वोषधानि निक्षिप्य। रुवति भीमो वैश्वामित्रो रेणुः पवमानसोमो जगती पञ्चत्वक्प्रक्षेपे विनियोगः।

रुवति भीमो वृषभस्तविष्यया शृंगे शिशानो हरिणी विचक्षणः।
आ योनिं सोमः सुकृतं निषीदति गव्ययी त्वग्भवति निर्णिगव्ययी॥

इति पञ्च त्वचो निक्षिप्य। प्र वो यज्ञेषु वसिष्ठो विश्वेदेवास्त्रिष्टुप् पञ्चपल्लवप्रक्षेपे विनियोगः।

प्र वो यज्ञेषु देवयन्तो अर्चन् द्यावा नमोभिः पृथिवी इषध्यै।
येषां ब्रह्माण्यसमानि विप्रा विष्वग्वियन्ति वनिनो न शाखाः॥

इति पञ्चपल्लवान् निक्षिप्य। गन्धद्वारामानन्दः श्रीरनुष्टुप् गन्धप्रक्षेपे विनियोगः।

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥

इति गन्धं प्रक्षिप्य। या ओषधीरथर्वणो भिषगोषधयोऽनुष्टुप् यवक्षेपे विनियोगः।

या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा।
मनै नु बभ्रूणामहं शतं धामानि सप्त च॥

इति यवान् प्रक्षिप्य । काण्डात्काण्डादनुष्टुप् दूर्वाप्रक्षेपे विनियोगः ।

काण्डात्काण्डात् प्ररोहन्ती परुषः परुषः परि ।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥

इति दूर्वां प्रक्षिप्य ।

याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥

इति फलानि प्रक्षिप्य । स हि रत्नानि श्यावाश्वः सविता गायत्री पञ्चरत्नप्रक्षेपे विनियोगः ।

ॐ स हि रत्नानि दाशुषे सुवाति सविता भगः ।
तं भागं चित्रमीमहे ॥

इति पञ्चरत्नानि निक्षिप्य । हिरण्यरूपो गृत्समदोऽपांनपात् त्रिष्टुप् हिरण्यप्रक्षेपे विनियोगः ।

हिरण्यरूपः स हिरण्यसंदृगपांनपात्सेदु हिरण्यवर्णः ।
हिरण्ययात्परियोनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै ॥

इति किञ्चिद्धिरण्यप्रतिनिधिं व्यावहारिकं द्रव्यं निक्षिप्य ।

भास्कराय विद्महे महद्द्युतिकराय धीमहि ।
तन्न आदित्यः प्रचोदयात् ॥

इति दशवारमभिमन्त्र्य । कलशोपरि हस्तं निक्षिप्य—

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥
कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥
अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ।
अत्र गायत्री सावित्री शान्तिः पुष्टिः सरस्वती ।
आयान्तु देवपूजार्थं दुरितक्षयकारकाः ॥

इति पठित्वा कलशदेवतां प्रार्थनमुद्रया प्रार्थयेत् ।

देवदानवसंवादे मथ्यमाने महोदधौ ।
उत्पन्नोऽसि तदा कुम्भ विष्णुना विधृतः स्वयम् ॥
त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ।
त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥

शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ।
आदित्या वसवो रुद्रा विश्वेदेवा सपैतृकाः ॥
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदः ॥
त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ।
सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा ॥

इति। ततो हृदयकमले देवं ध्यात्वा आवाहनक्रमेण कलशजले समावाह्य आवाहनीमुद्राः प्रदर्श्य। पञ्चोपचारैः प्रत्यक्षैः सौरमन्त्रेणाभ्यर्च्य । शुकेषु मे हरिमाणं रोपणाका सुदध्मसि शिखायै वषट् इति गालिनीमुद्रां प्रदर्श्य । उदगादयमादित्यो विश्वेन सहसा सह नेत्रत्रयाय वौषट् इति वीक्ष्य । अथो हारिद्रवेषु मे हरिमाणं निदध्मसि कवचाय हुं इत्यवगुण्ठनमुद्रयाऽवगुण्ठ्य । सम्पूर्णतृचेन व्यापकमुद्रया सकलीकृत्य । अर्धर्चषडङ्गैः जलेऽङ्गन्यासं कृत्वा । द्विषन्तमित्यस्त्रमन्त्रेण दश दिशश्छोटिकाभिर्बद्ध्वा । जलं स्पृशन् अष्टवारं तृचं जप्त्वा। उपपात्रेणास्त्रक्षालितेन तज्जलं किञ्चित् वर्धन्यां निक्षिप्य । पिधानेन अस्त्रक्षालितेन कलशं पिधाय । पिधाने उपपात्रं निक्षिप्य प्रणमेत् ।

॥ इति कलशस्थापनम् ॥

तद्दक्षभागे पूर्ववदेव प्रसन्नार्घ्यनामकं पात्रान्तरं स्थापयेत् । चन्द्रकलापूजान्तं कृत्वा कलशोदकबिन्दुं तन्मध्ये निक्षिप्य मूलेनाष्टवारमभिमन्त्र्य नमेत् ।

॥ इति प्रसन्नार्घ्यः ॥

प्रधानदेवतापूजायां आवरणपूजासमर्पणादावपि अस्य( प्रसन्नार्घ्यस्य ) विनियोगः ।

ततस्तद्दक्षभागे, मागधप्रस्थोदकग्राहि द्वादशाङ्गुलविस्तारं षडङ्गुलोच्चं षोडशाङ्गुल-दीर्घं मध्ये कपालचिह्नितं विशेषार्घ्यपात्रं कलशवदेव सर्वविधिसहितं स्थापयेत् । कलशजलमेव त्वत्र पूरणीयं इति विशेषः ।

॥ इति विशेषार्घ्यः ॥

शङ्खेतरतैजसं पात्रं साधारपिधानादि यथावकाशं पाद्यार्थं स्थापयेत् ।

भास्कराय विद्महे महद्द्युतिकराय धीमहि ।
तन्न आदित्यः प्रचोदयात् ॥

इति सौरगायत्र्यैव आधारस्थापनं पात्रस्थापनं जलपूरणं पिधानादिप्रक्षेपश्च कार्याणि । प्रतिप्रधानं

मन्त्रावृत्तिः । श्यामाकदूर्वाकमलविष्णुक्रान्ता जलमध्ये मूलेन क्षिपेत् । एवमेव गन्धाक्षतपुष्पयव-कुशाग्रतिलसर्षपदूर्वाप्रक्षेपेण अर्घ्यपात्रं स्थापयेत् । कर्पूरादिवासितं कृष्णागुरुधूपितं आचमन-पात्रम् । मधुपर्कपात्रं कांस्यभवं, तत्र सितादधिघृतानि समभागानि, अधिकं मधु च अल्पं जलं इति पञ्च द्रव्याणि पूरयेत् । पाद्यपात्रवदेव एतेषां स्थापना ।

॥ इति पाद्यादिपात्रचतुष्टयी ॥

विशेषार्घ्यजलं, कलशजलं वा, उपपात्रेणादाय आत्मानं प्रोक्ष्य अवशिष्टेन त्रिवारं मूल-मुच्चरन् गन्धपुष्पादिपदार्थान् प्रोक्षेत् ।

उदात्तस्वरज्ञानक्षेत्रस्वरूपश्रीसूर्यचरणकमलभक्तिसिद्ध्यर्थं परमात्मरूपश्रीसूर्यनारायण-प्रीत्यर्थं च अन्तर्यागं करिष्ये—

" ब्रह्मकन्दसमुद्भूतं ज्ञाननालेन शोभितम् ।
ऐश्वर्याष्टदलोपेतं परवैराग्यकर्णिकं ॥ "

पद्मं हृदि विचिन्त्य ।

" हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
सहस्रपुरुषादित्यः सहस्रकिरणो रविः ।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपाद् ॥ "

इति मन्त्रमुच्चार्य योऽसावादित्ये पुरुषः सोऽसावहमहं सूर्य आत्मा जगतस्तस्थुषश्च विश्वरूपाय परमात्मने नमः । इति अर्थानुसन्धानपूर्वकं वदेत् ।

॥ इत्यन्तर्यागः ॥

ततः पूर्वोक्तं सविस्तरमात्मपूजनं कुर्यात । तदशक्तस्तु, गन्धद्वारामित्यस्य आनन्दऋषये-नमः । श्रियै देवतायै नमः । अनुष्टुप्छन्दसे नमः । आत्मार्चने विनियोगाय नमः । यथास्थानं न्यस्य ।

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥

इति स्वललाटे गन्धाक्षतांश्च विन्यस्य ।

" माल्यादीनि सुगन्धीनि माल्यादीनि वै प्रभो ।
मयाऽऽहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् ॥ "

इति स्वशिरसि पुष्पाणि निक्षिप्य ।

"नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥"

सूर्यात्मने मह्यं नमः, इति हृदि आत्मानं प्रणमेत् ।

॥ इति आत्मपूजा ॥

महापात्रे सूर्यप्रतिमां सूर्यकान्तं वा निक्षिप्य । तत्र वा, जल एव वा, द्वादशदलेनावृत-मष्टदलं सकर्णिकं यन्त्रं विचिन्त्य मूलेन सामान्यार्घ्यजलेन प्रोक्षेत् । मलापकर्षणाय मौसलं स्नानं प्रतिमादेः कारयित्वा । द्वारदेवताः पूजयेत्—

प्राग्द्वारे ॐ द्वां द्वारश्रियै नमः द्वारश्रियं आवाहयामि स्थापयामि पूजयामि नमः । ॐ क्षें क्षेत्रपालाय नमः क्षेत्रपालं आ० स्था० पू० नमः । ॐ ह्रीं भुवनेश्वर्यै नमः भुवनेश्वरीं आ० स्था० पू० नमः । दक्षिणद्वारे ॐ द्वां द्वारश्रियै नमः द्वारश्रियं आ० स्था० पू० नमः । ॐ गं गणपतये नमः गणपतिं आ० स्था० पू० नमः । ॐ ह्रीं भुवनेश्वर्यै नमः भुवनेश्वरीं आ० स्था० पू० नमः । पश्चिमद्वारे ॐ द्वां द्वारश्रियै नमः द्वारश्रियं आ० स्था० पू० नमः । ॐ दुं दुर्गायै नमः दुर्गां आ० स्था० पू० नमः । ॐ ह्रीं भुवनेश्वर्यै नमः भुवनेश्वरीं आ० स्था० पू० नमः । उदग्द्वारे ॐ द्वां द्वारश्रियै नमः द्वारश्रियं आ० स्था० पू० नमः । ॐ मं महालक्ष्म्यै नमः महालक्ष्मीं आ० स्था० पू० नमः । ॐ ह्रीं भुवनेश्वर्यै नमः भुवनेश्वरीं आ० स्था० पू० नमः ।

॥ इति द्वारपूजा ॥

ततोऽष्टदलपद्मस्य दलाग्रेषु, पूज्यपूजकमध्यं प्राचीनं दलमारभ्य प्रादक्षिण्येन देवता-न्यसेत् । ॐ दं दण्डिने नमः । ॐ उं उषसे० । ॐ पिं पिङ्गलाय० । ॐ प्रं प्रचण्डाय० । ॐ क्षें क्षेत्रपालाय० । ॐ गं गणपतये० । ॐ दुं दुर्गायै० । ॐ लं लक्ष्म्यै० । दलाग्रदेवताभ्यो नमः इति ताः पूजयेत् ।

ततो दलमध्ये पूर्ववत् ॐ सूं सूर्याय नमः । ॐ रं रवये० । ॐ विं विवस्वते० । ॐ खं खगाय० । ॐ अं अरुणाय० । ॐ मिं मित्राय० । ॐ आं आदित्याय० । ॐ विं विष्णवे० । कर्णिकामध्ये ॐ भां भास्कराय नमः । दलमध्यदेवताभ्यो नमः इति पूजयेत् ।

दलमूले पूर्ववत् । ॐ आं आदित्याय० । ॐ सं सवित्रे० । ॐ सूं सूर्याय० । ॐ खं खगाय० । ॐ पूं पूष्णे० । ॐ गं गभस्तिने० । ॐ मां मार्तण्डाय० । ॐ जं जगच्चक्षुषे० । दलमूलदेवताभ्यो नमः इति ताः पूजयेत् ।

॥ इति यन्त्रन्यासः ॥

यन्त्रपीठस्य दक्षिणे ॐ गुं गुरुभ्यो नमः । वामे ॐ गं गणपतये नमः । मध्ये उपर्युपरि ॐ आं आधारशक्तये नमः । ॐ मूं मूलप्रकृत्यै० । ॐ आं आदिकूर्माय० । ॐ वं वराहाय० । ॐ अं अनन्ताय० । ॐ पृं पृथिव्यै० । ॐ स्वं स्वर्णमण्डपाय० । ॐ स्वं स्वर्णवेदिकायै० । ॐ रं रत्नसिंहासनाय० । ॐ श्वे श्वेतछत्राय० । सिंहासनपार्श्वयोः ॐ सिं सितचामराभ्यां नमः । सिंहासनस्य आग्नेयादि ईशानान्तपादेषु, ॐ धं धर्माय० । ॐ ज्ञां ज्ञानाय० । ॐ वैं वैराग्याय० । ॐ ऐं ऐश्वर्याय० । सिंहासनस्य प्रागादिगात्रेषु ॐ अं अधर्माय० । ॐ अं अज्ञानाय० । ॐ अं अवैराग्याय० । ॐ अं अनैश्वर्याय नमः । सिंहासनस्याभितः । ॐ ऋं ऋग्यजुःसामाथर्वणवेदेभ्यो नमः । ॐ कृं कृतत्रेताद्वापरकलियुगेभ्यो नमः । ॐ मं मन्दाराय० । ॐ पां पारिजाताय० । ॐ सं सन्तानाय० । ॐ कं कल्पभूरुहाय० । ॐ हं हरिचन्दनाय० । पीठपद्मस्य मूलादिषु । ॐ मूं मूलाय० । ॐ कं कन्दाय० । ॐ नां नालाय० । ॐ पं पद्माय० । ॐ पं पत्रेभ्यो० । ॐ कें केसरेभ्यो० । ॐ कं कर्णिकायै० । कर्णिकाया उपर्युपरि ॐ अं अर्कमण्डलाय० । ॐ उं सोममण्डलाय० । ॐ मं वह्निमण्डलाय० । ॐ ब्रं ब्रह्मणे० । ॐ विं विष्णवे० । ॐ रुं रुद्राय० । ॐ सं सत्त्वाय० । ॐ रं रजसे० । ॐ तं तमसे० । ॐ मां मायायै० । ॐ विं विद्यायै० । ॐ आं आत्मने० । ॐ अं अन्तरात्मने० । ॐ पं परमात्मने० । ॐ भूं भूःपुरुषाय० । ॐ भुं भुवःपुरुषाय० । ॐ स्वं स्वःपुरुषाय० । ॐ भूं भूर्भुवःस्वः पुरुषाय० । प्रागादिदलेषु मध्ये च ॐ रां दीप्तायै० । ॐ रीं सूक्ष्मायै० । ॐ रूं जयायै० । ॐ रें भद्रायै० । ॐ रैं विभूत्यै० । ॐ रों विमलायै० । ॐ रौं अमोघायै० । ॐ रं वैद्युतायै० । ॐ रः सर्वतोमुख्यै नमः ।

ॐ विनतातनयो देवः कर्ता साक्षी सुरेश्वरः ।
सप्ताश्वः सप्तरज्जुश्च अरुणो मे प्रसीदतु ॥

सप्ततुरगसहितमरुणसारथिमावाहयामि० । कर्णिकायामेव प्रागाद्यष्टदिशः प्रकल्प्य ॐ अं अरुणासनाय० । ॐ प्रं प्रभूतासनाय० । ॐ विं विभूतासनाय० । ॐ विं विमलासनाय० । ॐ कं कमलासनाय० । ॐ यों योगासनाय० । ॐ आं आधारासनाय नमः । ॐ मं मध्यासनाय० । ॐ श्रीं श्रीपरमसुखासनाय नमः । श्रीपरमसुखासनमावाहयामि स्थापयामि पूजयामि नमः ।

## ॥ इति पीठपूजा ॥

## ॥ अथ आवाहनम् ॥

अरुणाग्रेसरं हेमद्युतिं कुण्डलभूषितम् ।
तेजोराशिं श्रिया युक्तं तप्तकाञ्चनसन्निभम् ॥

किरीटिनं पद्मनेत्रं पद्मरागविभूषितम् ।
सिन्दूरारुणमीशानं वामार्धदयितं रविम् ॥
पाशाङ्कुशधरं देवं साक्षसूत्रकमण्डलुम् ।
प्रसन्नवदनं शान्तं कमलासनसंस्थितम् ॥
सप्ताश्वेनैकचक्रेण रथेन च विराजितम् ।
चन्द्रादिभिर्ग्रहैर्युक्तं केयूरादिविभूषणम् ॥
नानाविधैरावरणदैवतैरभितो वृतम् ।
ततोऽपि दूरे तद्रश्मिदग्धदेहं निजामयम् ॥
रोगानन्यानपि मुहुः कम्पमानान् कृताञ्जलीन् ।
ब्रह्मैव सच्चिदानन्दमिति ध्यायेद्दिवाकरम् ॥

एवं हृदि यन्त्रे च चिन्तयेत् ॥

**॥ इति ध्यानम् ॥**

गन्धपुष्पाक्षतानञ्जलौ अञ्जलिं च प्रसृतं हृदि कृत्वा,

ॐ एहि सूर्य सहस्रांशो तेजोराशे जगत्पते ।
अनुकम्पय मां भक्त्या प्रसीद परमेश्वर ॥

इति त्रिरुच्चार्य । ॐ उद्यन्नद्य० ते रधं ॐ भगवन् आगच्छागच्छ ॐ आवाहयामि, इत्युक्त्वा, हृदि ध्यातां मूर्तिं तेजोरूपां कृत्वा सुषुम्णान्तर्मार्गेण प्राणवायुना सह भ्रूमध्यं नीत्वा क्षणं विश्राम्य तेनैव पथा तत्तेजो ब्रह्मरन्ध्रं नीत्वा सुषुम्णाबहिर्मार्गेण हृदयमवरोप्य वहन्नासया प्राणवायुना बहिः पुष्पाञ्जलौ समानीय पुरःकल्पितमूर्तेर्ब्रह्मरन्ध्रे पुष्पाञ्जलिना सह तत्तेजः प्रक्षिप्य । तद्द्वारा प्रवेश्य सर्वावयवभावेन परिणमयेत् । किञ्चिदासनं प्रकल्प्य ॐ भूःपुरुषमावाहयामि । ॐ भुवःपुरुषमावाहयामि । ॐ स्वःपुरुषमावाहयामि । ॐ भूर्भुवःस्वःपुरुषमावाहयामि, इत्युक्त्वा । अधिदेवताप्रत्यधिदेवते अग्निरुद्रावावाह्य, अनावाह्य वा, चतुर्दशमुद्राः समन्त्रं सवासनं प्रदर्शयेत् । ॐ आवाहितो भव । ॐ संस्थापितो भव । ॐ सन्निहितो भव । ॐ सम्मुखीभव । ॐ अवगुण्ठितो भव । उद्यन्नद्य० दिवं हृदयाय नमः । हृद्रोगं० नाशय शिरसे स्वाहा । शुकेषु मे० ध्मसि शिखायै वषट् । अथो हारिद्र० निदध्मसि कवचाय हुम् । उदगादय० सहसा सह नेत्रत्रयाय वौषट् । द्विषन्तं मह्यं० रधं अस्त्राय फट् । ॐ सकलीकृतो भव । ॐ अमृतीकृतो भव । ॐ परमीकृतो भव । इति १४ ॥

" ॐ आदित्यं च सहस्रांशुं प्रभातीतसमुद्भवम् ।
लोकनाथं जगच्चक्षुः सूर्यमावाहयाम्यहम् ॥ "

श्रीसूर्यायावाहनं समर्पयामि नमः, इत्यक्षतान् निक्षिपेत् । अग्निं दूतं काण्वो मेधातिथिरग्निर्गायत्री सूर्याधिदेवताया अग्नेरावाहने विनियोगः ।

ॐ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।
अस्य यज्ञस्य सुक्रतुम् ॥

अधिदेवतायै अग्नये आवाहनं समर्पयामि नमः । त्र्यम्बकं वसिष्ठस्त्र्यम्बकोऽनुष्टुप् सूर्यप्रत्यधिदेवताया रुद्रस्यावाहने विनियोगः ।

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥

प्रत्यधिदेवतायै रुद्राय आवाहनं समर्पयामि नमः । इति सूर्यस्य वामदक्षिणपार्श्वयोः अक्षतान् निक्षिपेत् ॥ १ ॥

॥ इत्यावाहनम् ॥

ततः स्वदेहे मातृकान्यासं देवतादेहे पूर्ववत् पुरुषसूक्तन्यासं च कृत्वा, अकृत्वा वा, आसनमर्घ्योदकेन प्रोक्ष्य ।

" ॐ कालात्मा सर्वभूतात्मा वेदात्मा विश्वतोमुखः ।
यस्मादग्निस्वरूपस्त्वं ततः पाहि दिवाकर ॥ "

श्रीसूर्यायासनं समर्पयामि नमः । इति मण्डलस्योत्तरतो दद्यात् ॥ २ ॥

अर्घ्यादिकं सर्वं विशेषार्घ्योदकेन प्रोक्ष्य ।

ॐ एहि सूर्य सहस्रांशो तेजोराशे जगत्पते ।
अनुकम्पय मां भक्त्या गृहाणार्घ्यं नमोऽस्तु ते ॥

श्रीसूर्यायार्घ्यं समर्पयामि नमः । इति पद्मे देवशिरसि वा गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपदूर्वासहितजलरूपमर्घ्यं दद्यात् ॥ ३ ॥

ॐ उदुत्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ॥

श्रीसूर्याय पाद्यं समर्पयामि नमः । इत्यासनमण्डलयोर्मध्ये पद्मे वा दूर्वाश्यामाकक्रमलविष्णुक्रान्तासहितं केवलं वा सलिलं पाद्यं दद्यात् ॥ ४ ॥

" ॐ अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः ।
सूराय विश्वचक्षसे ॥ "

श्रीसूर्याय आचमनं समर्पयामि नमः । इति पद्मे जातीलवङ्गकङ्कोलमिश्रितेन कर्पूरादिवासितेन

जलेन आचमनं दद्यात् ॥ ५ ॥

ॐ श्रीसूर्याय मधुपर्कं समर्पयामि नमः । इति मधुपर्कमाचमनं च पद्मे दत्त्वा ।

सुगन्धितैललेपनं, पिष्टातकादिभिर्निर्णेजनं च अमन्त्रकं, दुग्धादिपञ्चगव्येन, पञ्चामृतैश्च तत्तन्मन्त्रैः स्नपनं च कारयित्वा,

ॐ अदृश्रमस्य केतवो विरश्मयो जनामनु ।
भ्राजन्तो अग्नयो यथा ॥

श्रीसूर्याय स्नानं समर्पयामि इति कस्तूरीगोरोचनाकुङ्कुमादिमिश्रितजलं मण्डले केसरे विसृजेत् ॥ ६ ॥

वस्त्राणि द्विषन्तं मह्यं० रधं हुं अस्त्राय फट् । इति विशेषार्घ्योदकेन प्रोक्ष्य । वं इति धेनुमुद्रया अमृतीकृत्य, बृहस्पतिदेवताकेभ्यो वस्त्रेभ्यो नमः, इति अक्षतादिभिर्वस्त्राणि सम्पूज्य ।

ॐ तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य ।
विश्वमाभासि रोचनम् ।

सूर्याय वस्त्रं समर्पयामि नमः । इति पद्मस्य बहिर्भागे द्वारादौ वस्त्राणि निवेदयेत् ॥ ७ ॥

उपवीतमर्घ्योदकेन प्रोक्ष्य अमृतीकृत्य ब्रह्मदैवत्यायोपवीताय नमः इति पूजयित्वा वस्त्रस्थाने

ॐ प्रत्यङ्देवानां विशः प्रत्यङ् उदेषि मानुषान् ।
प्रत्यङ् विश्वं स्वर्दृशे ॥

श्रीसूर्यायोपवीतं समर्पयामि नमः । इति दद्यात् ॥ ८ ॥

आभरणानि पूर्ववत् प्रोक्ष्याऽमृतीकृत्य विष्णुदैवत्येभ्यो मुकुटाद्याभरणेभ्यो नमः इत्यभ्यर्च्य ॐ श्रीसूर्यायाभरणानि समर्पयामि नमः इति समर्पयेत् ॥ ९ ॥

गन्धानपि पूर्ववत् विष्णुदैवत्येभ्यो नमः इत्यभ्यर्च्य

ॐ येना पावक चक्षसा भुरण्यन्तं जनाꣳअनु ।
तं वरुण पश्यसि ॥

श्रीसूर्याय गन्धान् समर्पयामि नमः इति गन्धान् पद्मे दद्यात् ॥ १० ॥

आम्रातकभिन्नानि पुष्पाणि पूर्ववदमृतीकरणान्ते वनस्पतिदैवत्येभ्यः पुष्पेभ्यो नमः इति पूजयित्वा ।

ॐ वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः ।
पश्यन् जन्मानि सूर्य ॥

श्रीसूर्याय पुष्पाणि समर्पयामि । इत्यनधोमुखानि पुष्पाणि पद्मे दद्यात् ॥ ११ ॥

## ॥ अथ षडङ्गशक्तिपूजा ॥

ॐ उद्यन्नद्य० दिवम् । हृदयाय नमः हृदयशक्तिं पूजयामि । ॐ हृद्रोगं० नाशय शिरसे स्वाहा । शिरःशक्तिं पूजयामि । ॐ शुकेषु मे० ध्मसि । शिखायै वषट् शिखाशक्तिं पूजयामि । ॐ अथो हारिद्र० निदध्मसि । कवचाय हुं कवचशक्तिं पूजयामि । ॐ उदगादय० सह । नेत्रत्रयाय वौषट् नेत्रशक्तिं पूजयामि । ॐ द्विषन्तं मह्यं० रधम् । अस्त्राय फट् अस्त्रशक्तिं पूजयामि ।

## ॥ इति षडङ्गशक्तिपूजा ॥

अस्याः अग्नीशासुरवायव्यकोणेषु पुरतो दिक्षु चेति षट् स्थानानि । मध्ये केचिन्नेत्रशक्तिमाहुः ॥ १२ ॥

## ॥ अथ अङ्गपूजा ॥

ॐ मार्तण्डाय नमः पादौ पूजयामि । ॐ भानवे नमः जङ्घे पूजयामि । ॐ आदित्याय नमः जानुनी० । ॐ हंसाय० ऊरू० । ॐ सूर्याय० कटी० । ॐ दिवाकराय० नाभिं० । ॐ तपनाय० हृदयं० । ॐ भास्कराय० कण्ठं० । ॐ विश्वचक्षुषे० मुखं० । ॐ सर्वात्मकाय नमः शिरः पूजयामि । ॥ १३ ॥

## ॥ इत्यङ्गपूजा ॥

## ॥ अथावरणपूजा ॥

कर्णिकायामेव दिशः प्रकल्प्य पूज्यपूजकयोर्मध्यभागरूपां प्राचीमारभ्य प्रादक्षिण्येन ।

मार्तण्डो भानुरादित्यो हंसः सूर्यो दिवाकरः ।<br>
तपनो भास्करश्चैव प्रथमावृतिदेवताः ॥

ॐ मां मार्तण्डाय नमः मार्तण्डं आवाहयामि स्थापयामि पूजयामि नमः । ॐ भां भानवे० भानुं० आ० स्था० पू० नमः । ॐ आं आदित्याय० आदित्यं० नमः । ॐ हं हंसाय० हंसं० नमः । ॐ सूं सूर्याय० सूर्यं नमः । ॐ दिं दिवाकराय० दिवाकरं० नमः । ॐ तं तपनाय० तपनं० नमः । ॐ भां भास्कराय० भास्करं आ० नमः । तृचेन सूर्याय पुष्पाञ्जलिं दत्त्वा—

अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।<br>
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥

इति पात्रान्तरेणोद्धृतेन सामान्यार्घ्यजलेन देवस्य दक्षिणहस्ते आवरणपूजां समर्पयेत् ॥

॥ इति प्रथमावरणम् ॥

ततो मध्ये वर्तमानमासाधिपं पूजयेत् ।

यथा । माघमासे० ॐ अं अरुणाय नमः अरुणं आवाहयामि स्थापयामि पूजयामि नमः । फाल्गुने ॐ सूं सूर्याय० सूर्यं आ० नमः । एवं चैत्रादिषु भानुं, तपनं, सवितारं, रविं, गभस्तिमालिनं, अर्यमणं, हिरण्यरेतसं, दिवाकरं, मित्रं, विष्णुं च पूजयेत् । अधिकमासे तु योऽधिकस्तन्मासाधिपं, क्षयमासे मासाधिपद्वयं पूजयेत् । इदं च आवरणानन्तर्गतम् । कर्णिकाप्रवर्तुले प्रागादिप्रादक्षिण्येन ।

ॐ ह्रां मित्राय० मित्रं आ० । ॐ ह्रीं रवये० रविं आ० । ॐ ह्रूं सूर्याय० सूर्यं आ० । ॐ ह्रैं भानवे० भानुं आ० । ॐ ह्रौं खगाय० खगं आ० । ॐ ह्रः पूष्णे० पूषणं आ० । ॐ ह्रां हिरण्यगर्भाय० हिरण्यगर्भं आ० । ॐ ह्रीं मरीचये० मरीचिं आ० । ॐ ह्रू आदित्याय० आदित्यं आ० । ॐ ह्रैं सवित्रे सवितारं आ० । ॐ ह्रौं अर्काय० अर्कं आ० । ॐ ह्रः भास्कराय० भास्करं आवाहयामि स्थापयामि पूजयामि नमः । सूर्याय पुष्पाञ्जलिं तृचेन दत्त्वा—

अभीष्टसिद्धिं० समर्पये तुभ्यं द्वितीयावरणार्चनम् । इति पूर्ववद्दत्त्वा नमेत् ॥

॥ इति द्वितीयावरणम् ॥

अथ दलमूलेषु दिक्क्लृप्त्या पूर्वदलमूले ॐ चं चन्द्राय० चन्द्रं आ० स्था० पू० नमः। आग्नेये ॐ मं मङ्गलाय० मङ्गलं० । दक्षिणे ॐ बुं बुधाय० बुधं० । पश्चिमे ॐ गुं गुरवे० गुरुं० । उत्तरे ॐ शुं शुक्राय० शुक्रं० । नैर्ऋत्ये ॐ शं शनैश्चराय० शनैश्चरं० । वायव्ये ॐ रां राहवे० राहुं० । ईशान्ये ॐ कें केतवे० केतुं० । मध्ये तृचेन सूर्याय पुष्पाञ्जलिं दत्त्वा ।

अभीष्टसिद्धिं मे० तृतीयावरणार्चनम् । इति पूर्ववत् समर्प्य नमेत् ॥

॥ इति तृतीयावरणम् ॥

सोमादेरीशान्पुरतः प्रागादिप्रादक्षिण्येन । ॐ धं धराय० धरं० आ० । ॐ ध्रुं ध्रुवाय० ध्रुवं आ० । ॐ सों सोमाय० सोमं आ० । ॐ अं अद्भ्याय० अद्भ्यं आ० । ॐ अं अनिलाय० अनिलं आ० । ॐ अं अनलाय० अनलं आ० । ॐ प्रं प्रत्यूषाय० प्रत्यूषं आ० । ॐ प्रं प्रभासाय० प्रभासं आ० । मध्ये सूर्याय तृचेन पुष्पाञ्जलिं दत्त्वा ॥

अभीष्ट० समर्पये तुभ्यं चतुर्थावरणार्चनम्। इति समर्प्य नमेत्॥

॥ इति चतुर्थावरणम् ॥

धरादेः पुरतः। ॐ वीं वीरभद्राय० वीरभद्रं आ०। ॐ शं शम्भवे० शम्भुं आ०। ॐ गिं गिरीशाय० गिरीशं आ०। ॐ अं अजायैकपदे० अजमेकपादं आ०। ॐ अं अहये बुध्न्याय० अहिं बुध्न्यं आ०। ॐ पिं पिनाकिने० पिनाकिनं आ०। ॐ भुं भुवनाधीश्वराय० भुवनाधीश्वरं आ०। ॐ दिं दिशांपतये० दिशांपतिं आ०। ॐ पं पशुपतये० पशुपतिं आ०। ॐ स्थां स्थाणवे० स्थाणुं आ०। ॐ भं भवाय० भवं आ०। पुष्पाञ्जलिं दत्त्वा। अभीष्ट० पञ्चमावरणम्। इति समर्प्य नमेत्॥

॥ इति पञ्चमावरणम् ॥

वीरभद्रादेः पुरतः। ॐ धां धात्रे० धातारं आ०। ॐ अं अर्यम्णे० अर्यमणं आ०। ॐ मिं मित्राय० मित्रं आ०। ॐ अं अंशुमते० अंशुमन्तं आ०। ॐ अं अरुणाय० अरुणं आ०। ॐ भं भगाय० भगं आ०। ॐ इं इन्द्राय० इन्द्रं आ०। ॐ विं विवस्वते० विवस्वन्तं आ०। ॐ पूं पूष्णे० पूषणं आ०। ॐ पं पर्जन्याय० पर्जन्यं आ०। ॐ तं तपनाय० तपनं आ०। ॐ विं विष्णवे० विष्णुं आ०। पुष्पाञ्जलिं दत्त्वा। अभीष्ट० ये तुभ्यं षष्ठावरणार्चनम्। इति दत्त्वा प्रणमेत्॥

॥ इति षष्ठावरणम् ॥

धात्रादेः पुरतः। ॐ अं अरुणाय० अरुणं आ०। ॐ सूं सूर्याय० सूर्यं आ०। ॐ भां भानवे० भानुं आ०। ॐ तं तपनाय० तपनं आ०। ॐ सं सवित्रे० सवितारं आ०। ॐ रं रवये० रविं आ०। ॐ गं गभस्तिमालिने० गभस्तिमालिनं आ०। ॐ अं अर्यम्णे० अर्यमणं आ०। ॐ हिं हिरण्यरेतसे० हिरण्यरेतसं आ०। ॐ दिं दिवाकराय० दिवाकरं आ०। ॐ मिं मित्राय० मित्रं आ०। ॐ विं विष्णवे० विष्णुं आ० पुष्पाञ्जलिं दत्त्वा। अभीष्ट० तुभ्यं सप्तमावरणार्चनम्। इति समर्प्य प्रणमेत्।

॥ इति सप्तमावरणम् ॥

अरुणादेः पुरतः। ॐ अं असिताङ्गाय० असिताङ्गं आ०। ॐ रुं रुरवे० रुरुं आ०। ॐ चं चण्डाय० चण्डं आ०। ॐ क्रों क्रोधाय० क्रोधं आ०। ॐ उं उन्मत्ताय० उन्मत्तं

आ० । ॐ कं कपालिने० कपालिनं आ० । ॐ भीं भीषणाय० भीषणं आ० । ॐ सं संहाराय० संहारं आवाहयामि स्थापयामि पूजयामि नमः । पुष्पाञ्जलिं दत्त्वा । अभीष्ट० तुभ्यं अष्टमावरणार्चनम् । इति समर्प्य नमेत् ॥

॥ इत्यष्टमावरणम् ॥

असिताङ्गादेः पुरतः । ॐ ब्रां ब्राह्मयै० ब्राह्मीं आ० । ॐ मां माहेश्वर्यै० माहेश्वरीं आ० । ॐ कौं कौमार्यै० कौमारीं आ० । ॐ वैं वैष्णव्यै० वैष्णवीं आ० । ॐ वां वाराह्यै० वाराहीं आ० । ॐ इं इद्राण्यै० इन्द्राणीं आ० । ॐ चां चामुण्डायै० चामुण्डां आ० । ॐ अं अरुणाय० अरुणं आ० ॥ पुष्पाञ्जलिं दत्त्वा । अभीष्ट० तुभ्यं नवमावरणार्चनम् । इति समर्प्य नमेत् ॥

॥ इति नवमावरणम् ॥

ब्राह्मयादेः पुरतः । ॐ में मेषाय० मेषं आ० । ॐ वृं वृषभाय० वृषभं आ० । ॐ मिं मिथुनाय० मिथुनं आ० । ॐ कं कर्काय० कर्कं० आ० । ॐ सिं सिंहाय० सिंहं आ० । ॐ कं कन्यायै० कन्यां आ । ॐ तुं तुलायै० तुलां आं० । ॐ वृं वृश्चिकाय० वृश्चिकं आ० । ॐ धं धनुषे० धनुषं आ० । ॐ मं मकराय० मकरं आ० । ॐ कुं कुम्भाय० कुम्भं आ० । ॐ मीं मीनाय० मीनं आ० स्था० पू० नमः । पुष्पाञ्जलिं दत्त्वा । अभीष्ट० दशमावरणार्चनम् । इति समर्प्य नमेत् ।

॥ इति दशमावरणम् ॥

यथास्थितप्रागादिक्रमेण । ॐ लं इन्द्राय सुराधिपतये कुलिशधराय ऐरावतवाहनाय श्रीसूर्यपार्षदाय नमः इन्द्रं सुराधिपं कुलिशधरं ऐरावतवाहनं श्रीसूर्यपार्षदं आवाहयामि स्थापयामि पूजयामि नमः । ॐ रं अग्नये तेजोऽधिपतये शक्तिधराय मेषवाहनाय श्रीसूर्यपार्षदाय नमः अग्निं० पार्षदं आ० स्था० पू० नमः । ॐ हं यमाय प्रेताधिपतये दण्डधराय महिषवाहनाय श्रीसूर्यपार्षदाय नमः यमं० पार्षदं आ० । ॐ षं निर्ऋतये रक्षोऽधिपतये खड्गहस्ताय परेतवाहनाय श्रीसूर्यपार्षदाय नमः निर्ऋतिं० पार्षदं आ० । ॐ वं वरुणाय जलाधिपतये पाशधराय नक्रवाहनाय श्रीसूर्यपार्षदाय नमः वरुणं० पार्षदं आ० । ॐ यं वायवे प्राणाधिपतये अङ्कुशधराय हरिणवाहनाय श्रीसूर्यपार्षदाय नमः वायुं० पार्षदं आ० । ॐ सं सोमाय नक्षत्राधिपतये गदाधराय शशवाहनाय श्रीसूर्यपार्षदाय नमः सोमं० पार्षदं आ० ।

ॐ शं ईशानाय विद्याधिपतये त्रिशूलधराय वृषभवाहनाय श्रीसूर्यपार्षदाय नमः ईशानं० पार्षद आ०। ततो निर्ऋतिवरुणयोर्मध्ये ॐ ह्रीं शेषाय नागाधिपतये चक्रधराय कूर्मवाहनाय श्रीसूर्यपार्षदाय नमः शेषं० पार्षदं आ०। इन्द्रेशानयोर्मध्ये ॐ अं ब्रह्मणे लोकाधिपतये पद्मधराय हंसवाहनाय श्रीसूर्यपार्षदाय नमः ब्रह्माणं० पार्षदं आ० स्था० पू० नमः। पुष्पाञ्जलिं दत्त्वा। अभीष्टसिद्धि० तुभ्यमेकादशावरणार्चनम्। इति समर्प्य प्रणमेत्।

॥ इत्येकादशावरणम् ॥

इन्द्रादेः परतः। ॐ वं वज्राय० वज्रं आ०। ॐ शं शक्तये० शक्तिं आ०। ॐ दं दण्डाय० दण्डं आ०। ॐ खं खड्गाय० खड्गं आ०। ॐ पां पाशाय० पाशं आ०। ॐ अं अङ्कुशाय० अङ्कुशं आ०। ॐ गं गदायै० गदां आ०। शूं शूलाय० शूलं आ०। ॐ चं चक्राय० चक्रं आ०। ॐ पं पद्माय० पद्मं आ०। पुष्पाञ्जलिं दत्त्वा। अभीष्ट० तुभ्यं द्वादशावरणार्चनम्। इति समर्प्य प्रणमेत्॥

॥ इति द्वादशावरणम् ॥

पुनश्च पूर्वेन्द्रमध्ये वर्तमानमासाधिपतिं सम्पूज्य। पूज्यपूजकयोर्मध्यभागरूपपूर्वादि-क्रमेण पाशादेः पुरतः। ॐ अरुणसारथये सप्तवाजिभ्यश्च नमः अरुणसारथिं सप्तवाजिनश्च आ०। ॐ मां माठराय० माठरं आ०। ॐ पिं पिङ्गलाय० पिङ्गलं आ०। ॐ दं दण्डाय० दण्डं आ०। ॐ गं गणपतये० गणपतिं आ०। ॐ दुं दुर्गायै० दुर्गां आ०। ॐ क्षें क्षेत्र-पालाय० क्षेत्रपालं आ०। ॐ वां वास्तोष्पतये० वास्तोष्पतिं आ०। पुष्पाञ्जलिं दत्त्वा। अभीष्ट० समर्पये तुभ्यं त्रयोदशावरणार्चनम्। इति समर्प्य नमेत्।

॥ इति त्रयोदशावरणम् ॥

अथ द्वादशदलपद्मे प्रागादिक्रमेण। ॐ मिं मित्राय० मित्रं आ०। ॐ रं रवये० रविं० आ०। ॐ सूं सूर्याय० सूर्यं आ०। ॐ भां भानवे भानुं आ०। ॐ खं खगाय० खगं आ०। ॐ पूं पूष्णे० पूषणं आ०। ॐ हिं हिरण्यगर्भाय० हिरण्यगर्भं आ०। ॐ मं मरीचये० मरीचिं आ०। ॐ आं आदित्याय० आदित्यं आ०। ॐ सं सवित्रे० सवितारं आ०। ॐ अं अर्काय० अर्कं आ०। ॐ भां भास्कराय० भास्करं आ०। पुष्पाञ्जलिं दत्त्वा। अभीष्ट० तुभ्यं चतुर्दशावरणार्चनम्। इति समर्प्य नमेत्।

॥ इति चतुर्दशावरणम् ॥

मित्रादेः पुरतः। सप्तमावरणदेवता एव पुनः पूज्याः। यथा ॐ अं अरुणाय० अरुणं आ०। ॐ सूं सूर्याय सूर्यं आ०। ॐ भां भानवे० भानुं आ०। ॐ तं तपनाय० तपनं आ०। ॐ सं सवित्रे० सवितारं आ०। ॐ रं रवये० रविं आ०। ॐ गं गभस्तिमालिने० गभस्तिमालिनं आ०। ॐ अं अर्यम्णे० अर्यमणं आ०। ॐ हिं हिरण्यरेतसे० हिरण्यरेतसं आ०। ॐ दिं दिवाकराय० दिवाकरं आ०। ॐ मिं मित्राय० मित्रं आ०। ॐ विं विष्णवे० विष्णुं आ०। पुष्पाञ्जलिं तृचेन दत्त्वा। अभीष्ट० तुभ्यं पञ्चदशावरणार्चनम्। इति समर्प्य नमेत्। इति सामान्यार्घ्यजलेन पात्रान्तरे घृतेनाक्षतापुष्पयुतेन श्रीसूर्यस्य दक्षिणहस्ते आवरणपूजां समर्प्य प्रणमेत्॥

॥ इति पञ्चदशावरणम्॥

अथ धूपपात्रे अङ्गारान् सुगन्धिचूर्णं च निक्षिप्य। सामान्यार्घ्येण प्रोक्ष्य। वं इति धेनुमुद्रया अमृतीकृत्य। गन्धर्वदैवत्याय धूपाय नमः इति सम्पूज्य। घण्टामपि तथैव प्रोक्ष्य अमृतीकृत्य। जगद्ध्वनिमन्त्रमातः स्वाहा इति सम्पूज्य वामकरेण वादयन् दक्षकरेण धूपपात्र मुद्धृत्य।

ॐ सप्त त्वा हरितो रथे वहन्ति देव सूर्य।
शोचिष्के शं विचक्षण॥

श्रीसूर्याय धूपं समर्पयामि नमः। इति देवस्य पादाभिमुख्येन धूपं प्रदर्श्य देवस्य वामतो धूपपात्रं स्थापयेत्॥

॥ इति धूपः॥

पूर्वोक्तलक्षणविशिष्टं दीपं प्रोक्ष्यामृतीकृत्य विष्णुदैवत्याय दीपाय नमः इति सम्पूज्य। घण्टां वादयन्।

ॐ अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः।
ताभिर्याति स्वयुक्तिभिः॥

श्रीसूर्याय दीपं समर्पयामि नमः। इति देवस्य दृष्ट्यभिमुख्येन दीपं प्रदर्श्य देवस्य दक्षिणतो दीपपात्रं आधारे स्थापयेत्॥

॥ इति दीपः॥

ततो देवस्य पुरतो वामे दक्षे वा मण्डलं निर्माय सौवर्णादिपात्रं साधारं निधाय तदुपरि नानाविधान्नभरितं पात्रं निधाय। ॐ सहस्रार हुं फट् इति सामान्यार्घ्यजलेन प्रोक्ष्य चक्रमुद्रया

संरक्ष्य, यं इति प्रोक्षणेन शोषितं अन्नं विभाव्य । रं इति दग्धदोषं विचिन्त्य । वं इति वामकरेण स्पृष्ट्वा दक्षिणेन स्पृशन् अष्टवारं तृचं जप्त्वा । ऐं अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय स्रावय, ह्रीं जूं सः स्वाहा; इति धेनुमुद्रया अमृतीकृत्य । विष्णुदैवत्याय नैवेद्याय नमः इति सम्पूज्य । हस्तेन पुष्पमुद्धृत्य, उद्यन्नद्य० द्विषते रधं स्वाहा, इति सूर्यस्य मुखात् तेज आनीय अन्ने क्षिप्त्वा, पुनर्जलं दत्त्वा, तदमृतात्मकं हविर्विभाव्य अभ्यर्च्य, गन्धाक्षतकुसुमसहितमञ्जलिं बद्ध्वा । "निवेदयामि भवते जुषाणेदं हवी रवे ।" इति पुष्पाञ्जलिं दत्त्वा । ॐ उद्वयं तमसस्परि० ज्योतिरुत्तमम् । श्रीसूर्याय नैवेद्यं समर्पयामि नमः, इत्युक्त्वा, अमृतोपस्तरणमसि इत्यमृतापोशनं दत्त्वा । वामहस्तेन ग्रासमुद्रां दक्षहस्तेन प्राणादिमुद्राः प्रदर्शयन् ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ उदानाय स्वाहा । ॐ समानाय स्वाहा । इति पठित्वा नैवेद्यं समर्पये इति वदेत् ।

ततः । ॐ भूर्भुवः स्वः उद्यन्नद्य० ते रधं भूर्भुवः स्वः ॐ स्वाहा इति मन्त्रेण अग्निमुखपूर्वकं अष्टोत्तरं सहस्रं शतं वा जुहुयादिति केचित् ।

ततः स्वच्छपात्रे कर्पूरादिवासितं जलममृतीकृत्य । श्रीसूर्याय पानीयमिदं समर्पयामि नमः, इति जलं निवेद्य । किञ्चिद् विश्रम्य । तृप्तोऽसि इति पृष्ट्वा, तृप्तोऽस्मि इति प्रतिवचनं विभाव्य । देवतामुखागतं तेजः परावर्त्य यथास्थानं संयोज्य अमृतापिधानमसि, इत्युत्तरापोशनं दत्त्वा । शेषभुग्भ्यो नमः इति किञ्चिद्दत्त्वा । नैवेद्यपात्रमुत्तरतो निधाय । श्रीसूर्याय गण्डूषानिमान् समर्पयामि नमः । श्रीसूर्याय दन्तधावनमिदं समर्प० । श्रीसूर्याय जिह्वोल्लेखनमिदं समर्प० । श्रीसूर्याय पुनर्गण्डूषानिमान् समर्प० । श्रीसूर्याय हस्तप्रक्षालनमिदं समर्प० । श्रीसूर्याय पाद्यमिदं समर्पयामि नमः । श्रीसूर्याय आचमनीयमिदं समर्प० । श्रीसूर्याय मुखप्रोञ्छनमिदं समर्प० । एलाजीरकगुडादिरूपं मुखवासं प्रोक्ष्यामृतीकृत्य श्रीसूर्याय मुखवासमिदं समर्पयामि नमः । इति सर्वं समर्पितं विभावयेत् ॥

## ॥ इति नैवेद्यम् ॥

फलानि प्रोक्ष्यामृतीकृत्य । अभ्यर्च्य ।

ॐ उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् ।<br>
हृद्रोगं मम सूर्य हरिमाणं च नाशय ।

श्रीसूर्याय फलानि समर्पयामि नमः इति दद्यात् ॥

पूर्वोक्तलक्षणं ताम्बूलं प्रोक्ष्य अमृतीकृत्य अभ्यर्च्य, ॐ शुकेषु मे हरिमाणं० निदध्मसि श्रीसूर्याय ताम्बूलं समर्पयामि नमः इति दद्यात् ।

ततः श्रीसूर्याय प्रसन्नार्घ्यं समर्पयामि नमः इति पात्रान्तरेण अर्घ्यं दत्त्वा । ॐ येनापावक चक्षसा० गन्धान् । ॐ विद्यामेषि रजः स्पृष्ट्वा० पुष्पाणि । ॐ सप्त त्वा हरितो रथे वहन्ति देव सूर्य० धूपम् । ॐ अयुक्त सप्त शुन्ध्यु० दीपं समर्प० । ॐ उदगादय० मो अहं द्विषते रधं श्रीसूर्याय दक्षिणां समर्पयामि नमः । इति दक्षिणां समर्पयेत् ।

ततस्तृचेन पुष्पाञ्जलिं दत्त्वा ।

कूपाकूपारकुल्यास्तथ च नदनदीखेयकासारवापी–
आपातालं प्रविष्टैर्दशशतगुणितै रश्मिभिर्वारि भूरि ।
ग्राहं ग्राहं निषिञ्चन् सुखयसि तृषितान् पादपान् पादहीनान्
एषा ते दानधाटी निरुपधिकरुणा वेति भानो न विद्मः ॥

विकर्तनो विवस्वांश्च मार्तण्डो भास्करो रविः ।
लोकप्रकाशकः श्रीमान् लोकचक्षुर्ग्रहेश्वरः ॥
लोकसाक्षी त्रिलोकेशः कर्ता हर्ता तमिस्रहा ।
तपनः पावकश्चैव शुचिः सप्ताश्ववाहनः ।
गभस्तिहस्तो ब्रह्मा च सर्वदेवनमस्कृतः ॥

आदित्यहृदयादिभिश्च यथासम्भवं स्तुत्वा उत्थाय, दक्षिणहस्तं प्रसार्य, शिरो दक्षभुजमूले नमयित्वा, दक्षकटिं च किञ्चित् विनाम्य प्रादक्षिण्येन सप्तवारं वेष्टयेत् ।

ततो देवस्य साक्षादभिमुखं भागं परिहृत्य किञ्चित्पार्श्वभागस्थो देवाभिमुखमूर्ध्वबाहुर्दण्डवत् भूमौ निपत्य

"हृदयं चिबुकं वक्त्रं नासिकाग्रं ललाटकम् ।
ब्रह्मरन्ध्रं दक्षवामौ कर्णौ च क्रमशो भुवि ।
स्पर्शयेत् स नमस्कारः कायिकोऽष्टाङ्ग ईरितः ॥"

इति रीत्या कायिकं, श्रीसूर्याय नमः इति वा, वैदिकपौराणिकमन्त्राणां वा नमस्कारलिङ्गकानां कथनरूपं वाचिकं, मत्तोऽयमुत्कृष्ट इति भावनरूपं मानसिकं च नमस्कारं कुर्यात् ।

ततः श्रीसूर्याय छत्रं समर्पयामि नमः । इत्यादि मन्त्रैश्चामरे, नृत्यं, गीतं, वाद्यं, दर्पणमन्यानपि राजोपचारान् समर्पयामि नमः इति समर्पयेत् ।

ॐ इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्तिष्ववस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यदुक्तं यत्स्मृतं यत्कृतं तत्सर्वं श्रीसूर्याय समर्पितमस्तु स्वाहा, मां मदीयं च सकलं श्रीसूर्याय समर्पये, इति मन्त्रेण चुलुकोदकेनात्मानं देवस्य पादयोः समर्पितं विभाव्य, निर्माल्यं स्वीकुर्यात् ।

पीठस्येशानभागे चन्दनादिना मण्डलं विरच्य तत्र ॐ माठराय नमः माठरं आवा० स्था० पू० नमः। ॐ पिङ्गलाय० पिङ्गलं आवा०। ॐ दण्डाय० दण्डं आ०। इति षोडशादिभिरुपचारैः अवशिष्टगन्धादिभिरेवाभ्यर्च्य, नैवेद्याच्छतांशं सजलं तेभ्यो निवेद्य,

"मन्त्रहीनं क्रियाहीनं भक्तिहीनं च यन्मया।
कृतं त्वराश्रितं कर्म कृपया तत्प्रपूरय" इति प्रार्थ्य, नत्वा।

"भास्कराय विद्महे महद्द्युतिकराय धीमहि।
तन्न आदित्यः प्रचोदयात्॥" इति द्वादशवारं जपेत्।

प्रसन्नार्घ्यपात्रं गृहीत्वा,

विनतातनयो देवः सर्वसाक्षी सुरेश्वरः।
सप्ताश्वः सप्तरज्जुश्च अरुणो मे प्रसीदतु॥

अरुणाय नमः, इति तज्जलं पात्रान्तरे निःशेषं निक्षिप्य अरुणायेदमर्घ्यं न मम, इति त्यजेत्। तेनैव प्रसन्नार्घ्यपात्रेण विशेषार्घ्यजलं किञ्चिद् गृहीत्वा

"एहि सूर्य सहस्रांशो तेजोराशे जगत्पते।
अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर॥

श्रीसूर्याय साङ्गाय सपरिवाराय नमः इति निक्षिप्य, श्रीसूर्यायेदमर्घ्यं न मम इति त्यजेत्। पुनस्तथैव गृहीत्वा,

जगन्नेत्र जगन्नाथ जगतः कारणाव्यय।
तमोहर नमस्तुभ्यं गृहाणार्घ्यं नमोऽस्तु ते॥

श्रीसूर्याय साङ्गाय सपरिवाराय नमः इति क्षिप्त्वा श्रीसूर्यायेदमर्घ्यं न मम, इति त्यजेत्।

विशेषार्घ्यपात्रमेवोच्चाल्य, शिरसा नत्वा।

ॐ घृणिः सूर्य आदित्यो न प्रभावात्यक्षरम्।
मधु क्षरन्ति तद्रसम्॥

सत्यं वै तद्रसमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्। श्रीसूर्याय नमः इति सूर्यार्घं दत्वा, श्रीसूर्यायेदमर्घ्यं न मम, इति त्यक्त्वा, प्रणमेत्॥

॥ इति पूजाविधिः॥

## ॥ अथ उत्तरविधिः ॥

ततः उष्ट्रासिकया उक्तलक्षणया उपविश्य । ॐ ह्रां उद्यनद्य मित्रमहः मित्राय दक्षिणमणिबन्धाय नमः । ॐ ह्रीं आरोहन्नुत्तरां दिवं रवये दक्षिणप्रकोष्ठाय नमः । ॐ ह्रूं हृद्रोगं मम सूर्य सूर्याय दक्षिणहस्ताय नमः । ॐ ह्रैं हरिमाणं च नाशय भानवे दक्षिणकूर्पराय नमः । ॐ ह्रौं शुकेषु मे हरिमाणं खगाय दक्षिणकरतलाय नमः । ॐ ह्रः रोपणाका सुदध्मसि पूष्णे दक्षिणकरपृष्ठाय नमः । ॐ ह्रां अथो हारिद्रवेषु मे हिरण्यगर्भाय वाममणिबन्धाय नमः । ॐ ह्रीं हरिमाणं निदध्मसि मरीचये वामप्रकोष्ठाय नमः । ॐ ह्रूं उदगादयमादित्यः आदित्याय वामहस्ताय नमः । ॐ ह्रैं विश्वेन सहसा सह सवित्रे वामकूर्पराय नमः । ॐ ह्रौं द्विषन्तं मह्यं रन्धयन् अर्काय वामकरतलाय नमः । ॐ ह्रः मो अहं द्विषते रधं भास्कराय वामकरपृष्ठाय नमः ।

## ॥ इति करशुद्धिन्यासः ॥

ततः कलशजलेन विशेषार्घ्यपात्रमापूर्य तत्राङ्गुष्ठानामिकाभ्यां गोरोचनं कुङ्कुमं रक्तचन्दनं रक्तं अरक्तं वा कमलं करवीरं जपाकुसुमं चैकैकं कुशाग्रमेकं दूर्वा चैका रक्ततण्डुलदशकं वैणवतण्डुलाः श्यामाकतण्डुलाः शालयो यवाः सर्षपास्तिलाः कर्पूरं चेति षोडशपदार्थान् क्षिप्त्वा, हस्तद्वयेन तत्पात्रं शनैः शिरःपर्यन्तं नीत्वा सूर्यैकचित्तो नासाग्रमवलोकयन्—

ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः उद्यन्नद्य मित्रमहः ह्रः ह्रौं ह्रैं ह्रूँ ह्रीं ह्रां
ॐ मित्राय नमः, इति सूर्यं दृष्ट्वा, मनसा नत्वा, अर्घ्यं देवस्य शिरसि प्रक्षिप्य ।
ॐ मित्रायेदमर्घ्यं न मम । इति त्यजेत् । एवं त्रिः ॥

पुनस्तथैव पूरणादिनासाग्रमवलोकनान्तं कृत्वा—

ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः आरोहन्नुत्तरां दिवं ह्रः ह्रौं ह्रैं ह्रूं ह्रीं ह्रां
ॐ रवये नमः, इत्युक्त्वा सूर्यं दृष्ट्वा मनसा नत्वा ॐ रवये इदमर्घ्यं न मम । इति त्यजेत् । एवमग्रेऽपि त्रिस्त्रिः ।

ॐ ह्रां ६ हृद्रोगं मम सूर्य ह्रः ६ ॐ सूर्याय नमः । ॐ सूर्यायेदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां ६ हरिमाणं च नाशय ह्रः ६ ॐ भानवे नमः । ॐ भानवे इदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां ६ शुकेषु मे हरिमाणं ह्रः ६ ॐ खगाय नमः । ॐ खगायेदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां ६ रोपणाका सुदध्मसि ह्रः ६ ॐ पूष्णे नमः । ॐ पूष्णे इदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां ६ अथो हारिद्रवेषु मे ह्रः ६ ॐ हिरण्यगर्भाय नमः । ॐ हिरण्यगर्भायेदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां ६ हरिमाणं निदध्मसि ह्रः ६ ॐ मरीचये नमः । ॐ मरीचये इदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां उदगादयमादित्यः ह्रः ६ ॐ आदित्याय नमः । ॐ आदित्यायेदमर्घ्य न मम ॥ ३ ॥

ॐ ह्रां ६ विभ्रेन सहसा सह ह्रः ६ ॐ सवित्रे नमः । ॐ सवित्रे इदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां ६ द्विषन्तं मह्यं रन्धयन् ह्रः ६ ॐ अर्काय नमः । ॐ अर्कायेदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां ६ मो अहं द्विषते रधं ह्रः ६ ॐ भास्कराय नमः । ॐ भास्करायेदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां ६ उद्यन्नद्य० न्नुत्तरां दिवं ह्रः ६ ॐ मित्ररविभ्यां नमः । ॐ मित्ररविभ्यां इदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां ६ हृद्रोगं० नाशय ह्रः ६ ॐ सूर्यभानुभ्यां नमः । ॐ सूर्यभानुभ्यामिदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां ६ शुकेषु मे० सुदध्मसि ह्रः ६ ॐ खगपूषभ्यां नमः । ॐ खगपूषभ्यामिदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां अथो हारिद्र० निदध्मसि ह्रः ६ ॐ हिरण्यगर्भमरीचिभ्यां नमः । ॐ हिरण्यगर्भमरीचिभ्यामिदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां ६ उदगादय० सह ह्रः ६ ॐ आदित्यसवितृभ्यां नमः । ॐ आदित्यसवितृभ्यामिदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां ६ द्विषन्तं० रधं ह्रः ६ ॐ अर्कभास्कराभ्यां नमः । ॐ अर्कभास्कराभ्यामिदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां ६ उद्यन्नद्य० हरिमाणं च नाशय ह्रः ६ ॐ मित्ररविसूर्यभानुभ्यो नमः । ॐ मित्ररविसूर्यभानुभ्य इदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां ६ शुकेषु मे० हरिमाणं निदध्मसि ह्रः ६ ॐ खगपूषहिरण्यगर्भमरीचिभ्यो नमः । ॐ खगपूषहिरण्यगर्भमरीचिभ्य इदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां ६ उदगादय० रधं ह्रः ६ ॐ आदित्यसवित्रर्कभास्करेभ्यो नमः । ॐ आदित्यसवित्रर्कभास्करेभ्य इदमर्घ्यं न मम ॥ ३ ॥
ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः उद्यन्नद्य० शुकेषु मे० उदगादय० रधं ह्रः ह्रौं ह्रैं ह्रूं ह्रीं ह्रां ॐ मित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्रर्कभास्करेभ्यो नमः । ॐ मित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्रर्कभास्करेभ्य इदमर्घ्यं न मम ॥ ३ ॥

**॥ संहत्य षट्षष्टिः प्रक्षेपाः ॥ २२ × ३ ॥**

एवं प्रत्यहं द्वादशावृत्तयः एकैकेन ब्राह्मणेन कार्याः इत्युत्तमः पक्षः । षट्, इति मध्यमः । चतस्र इत्यवमः । तिस्र इति निकृष्टः । यथाशक्तीति ततोऽपि चरमः ।

प्रथमदिनवदेव आसमाप्तिदिनं कार्यं, न न्यूनमधिकं वा । प्रात्यहिकाद्द्विगुणं रविवारे । अस्य च द्वैगुण्यस्य न प्रधानसङ्ख्यापूर्तावुपयोगः ।

ततः पुरुषसूक्तन्यासं सप्तषडङ्गीं च कृत्वा । आवाहनविनिर्मुक्तैरुपचारैः षोडशभिः पञ्चभिर्वा, पूजयेत् । येना पावक० गन्धान् । वि द्यामेषि० पुष्पाणि । सप्त त्वा हरि० धूपम् । अयुक्त सप्त० दीपम् । उद्वयं तमस० नैवेद्यम् । शुकेषु मे० ताम्बूलं च दद्यात् ।

ततोऽर्घ्यपात्रेणार्घ्योदकं च गृहीत्वा तृचेन पिबेत् पाययेच्च ।

नमो मित्रस्येति द्वादशर्चस्य सूक्तस्य सूर्यपुत्रायाभितपसे ऋषये नमः शिरसि । सूर्याय देवतायै नमः हृदये । जगतीछन्दसे, दशम्या ऋचस्त्रिष्टुप्छन्दसे नमः मुखे । सूर्यनमस्कारे विनियोगाय नमः करसम्पुटे । इति न्यस्य । नमो मित्रस्येति द्वादशभी ऋग्भिः मित्राय नम इत्यादि द्वादशनामसहिताभिः एकैकप्रदक्षिणपूर्वकं साष्टाङ्गं नमस्कुर्यात् । ऊर्ध्वबाहुर्दण्डवन्निपत्य हृच्चिबुकमुखनासाललाटेन भुवं स्पृष्ट्वा किञ्चिदुत्थाय जानुभ्यामवानिं गत्वा ब्रह्मरन्ध्रेण कर्णाभ्यां च भुवं स्पृशेदित्येको नमस्कारः साष्टाङ्गः । एवं द्वादश नमस्कारान् कुर्यात् ।

यज्ञेन यज्ञं० विश्वतश्चक्षुः इत्यनयो ऋचोः नारायणहिरण्यस्तूपाभ्यां ऋषिभ्यां नमः । पुरुषसूर्याभ्यां देवताभ्यां नमः । त्रिष्टुप्छन्दसे नमः । पुष्पाञ्जलौ विनियोगाय नमः ।

यथास्थानं विन्यस्य । यज्ञेन यज्ञमयजन्त देवास्तानि० साध्याः सन्ति देवाः । विश्वतश्चक्षु० जनयन् देव एकः । इति पुष्पाञ्जलिं दद्यात् ।

आकृष्णेनेत्यस्य हिरण्यस्तूपाय ऋषये नमः सूर्याय देवतायै नमः । जगतीछन्दसे नमः । सूर्यस्तुतौ विनियोगाय नमः । यथास्थानं न्यस्य । आकृष्णेन रजसा वर्त० याति भुवनानि पश्यन् । इति स्तुत्वा । सविता पश्चात्तात् इति मन्त्रस्य अभितपसे ऋषये नमः । सूर्याय देवतायै नमः । त्रिष्टुप्( जगती )छन्दसे नमः मुखे । यथास्थानं न्यस्य । सविता पश्चात्तात् सविता पुरस्तात् सवितो० रासतां दीर्घमायुः । इति प्रार्थ्य ।

रविः कर्ता रविर्भोक्ता रविः सर्वमिदं जगत् ।
रविर्जयति सर्वत्र यो रविः सोऽहमेव हि ॥

त्वमेवाहमहं त्वं च सच्चिन्मात्रवपुर्धरः ।
आवयोरन्तरभ्रान्तिस्त्वत्प्रसादात्प्रणश्यतु ॥

इत्युक्त्वा गुरूपदिष्टमार्गेण गुरुदेवतामन्त्रात्मनामैक्यं विभाव्य । सूर्यरूपिणमात्मानं ध्यात्वा ।

आवरणदेवतास्तेजोमयीः कृत्वा, सूर्यतनौ प्रविष्टा विभाव्य । क्षणं ध्यात्वा । नत्वा । तालत्रयेण देवं प्रबोध्य । तेजोमयमात्रं विभाव्य । अभ्यारमि इत्यस्य हर्यतः प्रगाधऋषये नमः । अग्नये देवतायै नमः । गायत्रीछन्दसे नमः । विसर्जने विनियोगाय नमः । इति विन्यस्य ।

अभ्यारमिदद्रयो निषिक्तं पुष्करे मधु ।
अवतस्य विसर्जने ॥

श्रीसूर्यं साङ्गं सपरिवारं विसर्जयामि नमः । स्वस्थानं गच्छ । इत्युक्त्वा । संहृतिमुद्रया तत्तेजः कुसुमेन सङ्गृह्य आघ्राणेन वहन्नाडीद्वारा हृदयं नीत्वा, पुनः हृदि सगुणमूर्तित्वेन ध्यात्वा तृचस्य षडङ्गं शरीरे विन्यस्य, पञ्चोपचारैर्मानसैरभ्यर्च्य क्षणं विश्राम्य, पुनस्तेजोमयं विचिन्त्य ब्रह्मरन्ध्रं नीत्वा सुषुम्णावर्त्मना पुनर्हृदयमानीय दण्डाकारं सूक्ष्मतरं तेजो विभाव्य मूलाधारे कुण्डलिनीत्वेन परिणमयेत् ।

॥ इति विसर्जनम् ॥

## ॥ अथ महासौरमन्त्रैरुपस्थानम् ॥

उदुत्यमिति त्रयोदशर्चस्य कण्वपुत्रः प्रस्कण्वर्षिः नव गायत्र्यश्चतस्रोऽनुष्टुप् छन्दांसि । चित्रं देवानामिति षडर्चस्य आङ्गिरसपुत्रः कुत्सर्षिः त्रिष्टुप्छन्दः । इन्द्रं मित्रमिति द्वयोर्ऋचो-रौचथ्यो दीर्घतमा ऋषिः त्रिष्टुभौ छन्दसी । हंसः शुचिषदित्येकस्या ऋचः गौतमपुत्रो वामदेवो जगती । यत्त्वा सूर्यस्येति ऋचः भूमिपुत्रोऽत्रिस्त्रिष्टुप्छन्दो यदद्येत्येकस्या ऋचः उत्सूर्येति तिसृणां ऋचां उद्वेतीति सार्धानां चतसृणां ऋचां मैत्रावरुणो वसिष्ठस्त्रिष्टुप्छन्दांसि । उदुत्यद्दर्शत-मिति तिसृणां मैत्रावरुणो वसिष्ठऋषिः बृहतीसतोबृहतीपुरउष्णिक् क्रमाच्छन्दांसि । बण्महानिति द्वयोर्भृगुपुत्रो जमदग्निर्बृहतीसतोबृहत्यौ । नमो मित्रस्येति द्वादशर्चस्य सूक्तस्य सूर्यपुत्रोऽभितपा ऋषिः जगती दशमी त्रिष्टुप् । सूर्यो न इति पञ्चर्चस्य सूक्तस्य सूर्यपुत्रश्चक्षुर्ऋषिः गायत्र्य-श्छन्दांसि । विभ्राड् बृहदिति चतुरर्चस्य सूर्यपुत्रो विभ्राड् जगती चतुर्थी प्रस्तारपङ्क्तिः । आयं गौरिति तृचस्य सार्पराज्ञ्यृषिर्गायत्री । सर्वासां सूर्यो देवता सूर्योपस्थाने विनियोगः । इति स्मृत्वा ।

अस्य श्रीसार्धषष्टिऋक्समूहस्य कण्वाङ्गिर उचथ्यगौतमभूमिमित्रावरुणभृगुपुत्रेभ्यः प्रस्कण्वकुत्सदीर्घतमावामदेवात्रिवसिष्ठजमदग्निभ्यः, सूर्यपुत्रेभ्योऽभितपश्चक्षुर्विभ्राड्भ्यः ऋषिभ्यः सार्पराज्ञ्यृषये च नमः । शिरसि । गायत्र्यनुष्टुप्जगतीबृहतीसतोबृहतीपुरउष्णिक्-प्रस्तारपङ्क्तिभ्यश्छन्दोभ्यो नमः । मुखे । श्रीसूर्याय देवतायै नमः हृदये । सूर्योपस्थाने विनियोगाय नमः । करसम्पुटे । इति न्यस्य । उत्थाय । ऊर्ध्वौ बाहू कृत्वा । सूर्याभिमुखो यथालक्षणं जपेत्—

ॐ उदुत्यं जातवेदसं० ॥ १३ ॥

ॐ चित्रं देवानामुदगादनीकं० ॥ ६ ॥

ॐ इन्द्रं मित्रं वरुणमग्निमाहु० ॥ २ ॥

ॐ हंसः शुचिषद्वसुरन्तरिक्ष० ॥ १ ॥

ॐ यत्त्वा सूर्य स्वर्भानुस्तमसा० ॥ १ ॥

ॐ यदद्य सूर्य ब्रवो नागा० ॥ १ ॥

ॐ उत्सूर्यो बृहदर्चींष्य० ॥ ३ ॥

ॐ उद्वेति सुभगो विश्वचक्षाः० ॥ ४½ ॥

ॐ उदुत्यद्दर्शतं वपुर्दिवऽएति प्रतिह्वरे ॥ ३ ॥

ॐ बण्महाँ असि सूर्य बलादित्य० ॥ २ ॥

ॐ नमो मित्रस्य वरुणस्य चक्षसे० ॥ १२ ॥

ॐ सूर्यो नो दिवस्पातु वातोऽअन्तरिक्षात्० ॥ ५ ॥

ॐ विभ्राड् बृहत्पिबतु सोम्यं० ॥ ४ ॥

ॐ आयं गौः पृश्निरक्रमी० ॥ ३ ॥ ६०½ ऋक्समूहः

प्रतिवस्तोरहद्युभिः

अन्ते पुनः प्रणवमुच्चार्य । गृहं गच्छेत् ।

प्रतिरविवारं द्वादश ब्राह्मणान् भोजयेत् तोषयेच्च । तुष्टेषु ब्राह्मणेष्वेव कर्मपूर्तिर्नान्यथा ।

अन्यूनानधिकं कर्तुं यथावत् केन शक्यते ।
न पावको न कर्माणि न मन्त्रा न च देवताः ।
फलन्त्यपि तु भक्तानाममोघा ब्राह्मणाशिषः ॥

इत्थं च विस्तृततरा पद्धतिः पण्डितानां राज्ञां च काम्यकर्मस्वत्यन्तमावश्यकी । इतोऽपि विस्तृततमा, विस्तृता, विस्तृतकल्पाः, सङ्क्षिप्ताः, सङ्क्षिप्ततराः, सङ्क्षिप्ततमा, अतिसङ्क्षिप्ततमा अन्यविधाश्चेत्यधिकारिभेदेन पद्धतिरूपाः प्रयोगविधयः पूर्वनिर्णीतार्थेषु वैकल्पिकपक्षानालोच्य, नित्यकाम्यभेदान् शक्तितारतम्यं ज्ञानाज्ञानकृततारतम्यं देशकालधनादिव्यवस्थां चालोच्य, बुद्धिमद्भिरमत्सरैर्धर्मशीलैरस्मादेव ग्रन्थाच्छतशः कल्पयितुं शक्यन्ते । इति विस्तरभिया न ते पृथगस्माभिः कथिता इत्यवधेयम् ।

॥ इति श्रीमद्गम्भीरभारती-दीक्षितसूरिसूनुना भास्कररायेणोन्नीते तृचभास्करे तृचार्घ्यपद्धतिः सम्पूर्णा ॥

## ॥ अथ अत्रोपयुक्तानां उपयोक्ष्यमाणानां च मुद्राणां लक्षणानि ॥

यज्ञकृत्येषु चेच्छक्तौ हस्तौ मुद्रादिषु क्षमौ ।
तदा मुद्रां विधायैव तत्तत्कृत्यं समाचरेत् ॥

मुद्राविमुक्तहस्तेन क्रियते कर्म दैविकम् ।
यदि तन्निष्फलं तस्मात्कर्म मुद्रान्वितश्चरेत् ॥

इत्यादि **वचनात्** तानि ( मुद्रालक्षणानि ) आवश्यकानि ।

हस्तद्वये त्वधोवक्त्रे सम्मुखे च परस्परम् ।
वामाङ्गुलीर्दक्षिणानामङ्गुलीनां च सन्धिषु ॥

संवेश्य मध्यमाभ्यां तु तर्जन्यौ द्वे प्रयोजयेत् ।
कनिष्ठे द्वे अनामाभ्यां युञ्ज्यात् सा **धेनुमुद्रिका** ॥

वामाङ्गुष्ठं तु सङ्गृह्य दक्षिणेन तु मुष्टिना ।
कृत्वोत्तानं तथा मुष्टिमङ्गुष्ठं तु प्रसारयेत् ॥

वामाङ्गुलीस्तथा श्लिष्टाः संयुक्ताः सुप्रसारिताः ।
दक्षिणाङ्गुष्ठसंस्पृष्टा मुद्रा **शङ्खस्य** चोदिता ॥

हस्तौ तु सम्मुखौ कृत्वा संलग्नौ सुप्रसारितौ ।
कनिष्ठाङ्गुष्ठकौ लग्नौ मुद्रा **चक्रस्य** सिद्धिदा ॥

अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रथिताङ्गुली ।
अङ्गुल्यौ मध्यमे भूयः संलग्ने सुप्रसारिते ॥

**गदामुद्रा** समाख्याता परा मुक्तिकरी तथा ।
करौ तु सुमुखौ कृत्वा सम्मुखावुन्नताङ्गुली ।
तलान्तर्मिलिताङ्गुष्ठौ कुर्यात्सा **पद्ममुद्रिका** ॥

हस्तौ तु विमुखौ कृत्वा ग्रथयित्वा कनिष्ठिके ।
तर्जन्यौ मुखतः श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा ॥

मध्यमाऽनामिकायुग्मे द्वौ पक्षाविव चिन्तयेत् ।
एषा **गरुडमुद्रा** स्यादशेषविषशातिनी ॥

अन्योन्याभिमुखौ हस्तौ कृतौ चेद् ग्रथिताङ्गुली ।
अङ्गुष्ठौ च मिथः श्लिष्टौ मुद्रैषा **ग्रथिताभिधा** ॥

मुष्टिद्वयस्य तर्जन्यौ प्रसार्योर्ध्वाधरीकृते ।
ग्रथिते चेदसौ मुद्रा **यमपाशा**भिधा मता ॥

हस्तं मुसलवत्कृत्वा मुष्टिमाबध्य तर्जनीम् ।
प्रसार्य सङ्कुचेत्सेयं मुद्रा स्याद**ङ्कुशाभिधा** ॥

अत्रैव मध्यमाया अपि प्रसारणं सम्प्रदायसिद्धम् ।

हस्ताभ्यामञ्जलिं कृत्वाऽनामिकामूलपर्वणोः ।
अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा **त्वावाहनी** स्मृता ॥

अधोमुखी त्वियं चेत्स्यान्मुद्रा **संस्थापिनी मता** ।
उच्छ्रिताङ्गुष्ठमुष्ट्योस्तु संयोगात् **सन्निधापिनी** ॥

अन्तःप्रवेशिताङ्गुष्ठा सैव **संरोधिनी** मता ।
मुष्टिद्वयस्थिताङ्गुष्ठौ सम्मुखौ तु परस्परम् ।
संश्लिष्टावुच्छ्रितौ कुर्यात् सेयं **सम्मुखमुद्रिका** ॥

मुष्टिद्वयस्य तर्जन्यौ प्रसार्याधोमुखीकृते ।
अनुलोमविलोमेन भ्रामिते देवताऽभितः ।
दुष्टदृष्टिनिरासाय सैषा मुद्रा**ऽवगुण्ठनी** ॥

हृदयादिषडङ्गानां मुद्रा देवतनौ कृताः ।
**सकलीकरणाभिख्याः** सर्वावयवपूर्तिदाः ॥

त्रिद्व्येकदशकत्रिद्विसङ्ख्याकाङ्गुलिभिः क्रमात् ।
**हृदयादिषडङ्गानां मुद्रा** ऊह्या विपश्चिता ॥

तर्जन्यादित्रयेण प्रसारितेन हृदयम् । अङ्गुष्ठतर्जनीभ्यां प्रसारिताभ्यां योजितमुखाभ्यामधोऽग्राभ्यां शिरः । प्रसृताङ्गुष्ठेनाधोमुखेन शिखा । करद्वयदशाङ्गुलीभिः प्रसृताभिः कवचम् । तर्जन्यादित्रयाग्रेण त्रिकोणाग्रतुल्येन नेत्रम् । द्विनेत्र्यां त्वनामिकालोपः । हस्तद्वयस्याप्यङ्गुष्ठतर्जनीभ्यां सशब्दाभ्यामभितो भ्रामिताभ्यां अस्त्रमिति साम्प्रदायिकोऽर्थः ।

अधोमुखी धेनुमुद्रा देवस्योपरि दर्शिता ।
**अमृतीकरणी** प्रोक्ता परमानन्ददायिनी ॥

अधोमुखौ ग्रथिताङ्गुष्ठौ प्रसृताङ्गुलिकौ करौ ।
**परमीकरणं** नाम देवस्योपरि चालितौ ॥

प्रसृताङ्गुलिकौ हस्तौ मिथः श्लिष्टौ च सम्मितौ ।
कुर्यात्स्वहृदये सेयं मुद्रा **प्रार्थन**संज्ञिका ॥

अञ्जल्याऽञ्जलिमुद्रा स्याद् **वासुदेवा**भिधा च सा ।
सैव शीर्षादिपादान्तं चालिता चेदधोमुखी ।
मुद्रैषा **व्यापिका** नाम सद्गुणव्याप्तिदायिनी ॥

तर्जन्यादित्रये कार्ये हस्तयोः सङ्कुचन्मुखे ।
प्रसारिते सुसरले तथाङ्गुष्ठकनिष्ठिके ॥

दक्षहस्तस्य तर्जन्या वामस्यानामिकामुखम् ।
अनामया च तर्जन्या मुखं मध्यां च मध्यया ॥

अङ्गुष्ठेन कनिष्ठाया अङ्गुष्ठस्य कनिष्ठया ।
स्पर्शयेद् **गालिनी** मुद्रा सैषा तीर्थापकर्षिणी ॥

अङ्गुष्ठाग्रेण संस्पृश्ये कनिष्ठामध्यपर्वणी ।
**गन्धमुद्रे**ति सा ख्याताऽङ्गुष्ठयोर्मध्यपर्वणी ॥

तर्जन्यग्रेण संस्पृश्ये **पुष्पमुद्रे**ति कीर्तिता ।
तर्जनी मध्यमाऽनामा मध्यपर्वाणि संस्पृशेत् ।
अङ्गुष्ठाग्रेण ता धूपदीपनैवेद्यमुद्रिकाः ॥

ऊर्ध्वाङ्गुलिभि**र्ग्रासमुद्रा** वामकरे कृता ।
सैव **ताम्बूलमुद्रा** स्याद्दक्षे सङ्कुचिताङ्गुलिः ॥

तर्जनीमध्यमाङ्गुष्ठैः **प्राणमुद्रा** प्रकीर्तिता ।
मध्यमाऽनामिकाङ्गुष्ठैः स्याद**पानस्य मुद्रिका** ॥

कनिष्ठाऽनामिकाङ्गुष्ठै**र्व्यानमुद्रा** प्रकीर्तिता ।
तर्जन्यनामिकाङ्गुष्ठैः स्या**दुदानस्य** मुद्रिका ॥

**समानमुद्रा**ऽङ्गुलिभिः संहताभिस्तु पञ्चभिः ।
मणिबन्धस्थितौ कृत्वा प्रसृताङ्गुलिकौ करौ ॥

कनिष्ठाङ्गुष्ठयुगले मिलित्वान्ते प्रसारयेत् ।
**सप्तजिह्वाख्यमुद्रे**यं वैश्वानरवशङ्करी ॥

मिलिताऽनामिकाङ्गुष्ठमध्यमाग्राणि योजयेत् ।
शिष्टे द्वे उच्छ्रिते कुर्यान्**मृगमुद्रे**यमीरिता ॥

अनयोरुपयोगस्तु होमविधौ भविष्यति ।
कमलाकृतिमुद्रा तु **सौरमुद्रे**ति कीर्तिता ॥

त्रिम्बमुद्रोक्ता, **कालिकापुराणे**—

मुष्टिद्वयं तथोत्तानं कृत्वा संयोज्य पार्श्वतः ।
दक्षिणस्य कनिष्ठादीन् प्रसार्य क्रमतः पुरः ॥

तथा वामकनिष्ठादीन् एकैकान् सुप्रसारयेत् ।
अष्टौ मुद्राः समाख्याता नाम तासां क्रमाच्छृणु ॥

प्रोन्नामोन्नामने चैव बिम्बं पाशुपतं तथा ।
शुद्धं त्यागः सारणी च तथा चैव प्रसारिणी ॥ इति ॥

कमलबिम्बमुद्रे सौरमन्त्रमात्रेषूपयुक्ते ।

दक्षाङ्गुष्ठं वामाङ्गुष्ठे क्षिप्त्वा हस्तद्वयेन तु ।
एकमुष्टिं सावकाशां कुर्यात्सा **कुम्भमुद्रिका** ॥
अधोमुखे वामहस्ते ऊर्ध्वास्यं दक्षहस्तकम् ।
क्षिप्त्वाङ्गुलीरङ्गुलीभिर्ग्रथयित्वा विवर्तयेत् ॥
प्रोक्ता **संहारमुद्रेयं** विनियुक्ता विसर्जने ।

इयमेव **निर्याणमुद्रेत्युच्यते** ।

## ॥ इति भास्कररायभारत्युन्नीते तृचभास्करे मुद्रालक्षणानि ॥

**अथ होमः** । स च द्विविधः । अर्घ्याङ्गः प्रधानश्च । तत्र आद्यस्तु अर्घ्यसङ्ख्यातो दशांशसङ्ख्याकः । तत्र दशसङ्ख्याकांशार्घ्यदाने एकांशरूपो होम इति स्पष्टम् । एकादशादिविंशतिपर्यन्तांशानुष्ठाने द्वावंशौ होमः । एवमेकविंशत्यादित्रिंशत्पर्यन्तं त्रयोंऽशा इत्यादि । यद्येक एवांशोऽनुष्ठितः तदा तस्य चतुर्विंशत्यावृत्तिरूपत्वेन दशमभागासम्भवेऽप्यावृत्तित्रयात्मकं होमं कुर्यात् । एवमेकस्य लघोरंशत्रयं होमः । एकस्यार्घ्यस्य लघुत्रयात्मको होमः इत्यादि । एकस्या आवृत्तेरनुष्ठाने तु समसङ्ख्याको होमः । अस्य च स्वाभावप्रतियोगिको विकल्पः षोडशिग्रहवत् । अत एव करणेऽभ्युदयोऽकरणेऽपि साङ्गता । एतच्च

"अधिकं फलमिच्छेद्यस्तस्य होमो विधीयते ।
अर्घ्यदानस्य सङ्ख्याया दशांशप्रमितो हि सः" । इति **वचनात्** ।

"एवमर्घ्यविधिं कृत्वा होमं कुर्याद्यथाविधि" इति **वचनाच्च** लभ्यते । त्वा श्रुत्या फलवदफलन्यायेन च अङ्गत्वबोधनात् फलाधिक्यकामाधिकारिकत्वोक्त्या कृताकृततायाश्च सूचनात् ।

तत्र द्रव्यं त्वाज्यादि

"अत्राज्यहोम इष्टः स्यात्तिलैर्वा सर्पिषा सह ।
घृताक्तैः पायसैर्वापि शर्कराखाद्यमिश्रितैः" ॥

इत्युक्तेः । क्वचित्तु खाद्यानां पायसेन चेति पार्थक्येन द्रव्यत्वमुक्तम्

"जुहुयात्पायसाज्येन खाद्यैर्नानाविधैरपि ।
अर्कपुष्पैः समिद्भिश्च करवीरैस्तथा परैः ॥
रक्तचन्दनमिश्राभिरक्षताभिस्तथा पुनः ।
साग्रैर्दूर्वाङ्कुरैः साज्यैस्तिलैरपि यवैः शुभैः" ॥

इति मन्त्रास्तु तृचघटिताः पूर्वमुक्ता एव । इयांस्तु विशेषः । इदमर्घ्यं न ममेत्या-र्घ्यनिर्देशस्थाने स्वाहाकारस्य प्रयोग इति । यथा—

"ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः उद्यन्नद्य मित्रमहः ह्रः ह्रौं ह्रैं ह्रूं ह्रीं ह्रां
ॐ मित्राय नमः स्वाहा, इति" ।

एवं पक्षान्तरेष्वप्यूह्यम् । तथा च स्पष्टवचनं "इदमर्घ्यं पदस्थाने स्वाहाकारं प्रयोजयेत्" इति । **केचित्तु** इदमर्घ्यं स्वाहेति समुच्चित्य प्रयोजयन्ति ।" इदमर्घ्यं स्वाहाकारमर्घ्यहोमेष्वयं क्रम" इति वचनं स्वपक्षोपोद्बलकं मन्यमानाः समर्थयन्ते च तदनुयायिनः **केचित्** । तेषां महती भ्रान्तिरेव मूलम् । इदमर्घ्यं स्वाहेति वाक्यस्यानन्वितत्वात् । उभयोरपि स्वातन्त्र्येण प्रक्षेपद्योत-कत्वेन सह प्रयोगायोगात् । स्वाहापदयोगे चतुर्थ्या आवश्यकत्वाच्च । यद्यप्यर्घ्यस्य देवतात्वा-भावेन धृत्यादिहोमवन्न चतुर्थीतिसुवचत्वात् सहप्रयोगोऽपि वाचनिको न विरुध्यते इति, तथापि पूर्वोक्तस्पष्टवचनस्यान्यथानयनसम्भवान्न वाचनिकता । अर्घ्यहोमेष्विति तु द्वन्द्वो, न षष्ठीतत्पुरुषः । तथा च अर्घ्यहोमयोर्यथाक्रममिदमर्घ्यम् इत्यस्य स्वाहाकारमित्यस्य चान्वयः । प्रयोजयेदिति पूर्वार्धस्थेन पदेन तस्यान्वयः । "ततो नाम चतुर्थ्यन्तं नमोऽन्तं च प्रयोजयेत्" । इति पूर्वार्धात् । इत्थं च अर्घ्ये इदमर्घ्यं इति प्रयोजयेत् होमे स्वाहाकारं प्रयोजयेत् इत्थं क्रम इति निष्कृष्टोऽर्थः । एवं च सति "इदमर्घ्यं पदस्थाने स्वाहाकारं प्रयोजयेत्" इति वचनेन एकार्थता सिध्यति इति दिक् ।

स्वतन्त्रप्रधानोऽपि होमो वचनादेव लभ्यते—

शतं वाऽथ सहस्रं वा अयुतं लक्षमेव वा ।
गायत्र्या सौरमन्त्रैश्च तृचमन्त्रैर्विशेषतः ॥
गायत्र्या वाऽथ होतव्यं सूर्यस्य प्रीतये पुनः ।
एवमाराधितः सूर्यः सर्वकामार्थसिद्धिदः ॥ इति ।

अत्र शतादिसङ्ख्याविकल्पैः स्वतन्त्रफलेन च प्राधान्यमपि होमस्यावसीयते। अङ्गहोमे आवृत्त्याद्यतिरिक्तसङ्ख्याऽभावात्। तृचातिरिक्तमन्त्राभावाद्दशांशत्वेन यो होमो विहितः स तन्मन्त्राभिन्नमन्त्रकः इति नियमात् अङ्गे फलान्तराभावात् श्रुतौ वा पापश्लोकश्रवणादिवदर्थवादत्वपर्यवसानात्।

इयांस्तु विशेषः। गायत्र्यादिकरणकप्रधानहोमे कार्ये नायं पूर्वोक्तो विधिरावश्यकः। तृचकरणकप्रधानहोमे तु पूर्वोक्तविधिरभ्युदयाधिक्यकारक इति बोध्यम्। अन्योऽपि विशेषः। तृचप्रधानहोमस्तु देवस्य नैवेद्योत्तरं उत्तरापोशनात्पूर्वं कार्यः। तृचाङ्गहोमस्तु सर्वाङ्गविशिष्टार्घ्यदानोत्तरमिति। अत्रैका सूर्यगायत्री अन्या वेदमातेति पुनरुक्तिः। क्वचित्तु "व्याहृत्या वाऽथ होतव्यम्" इति पाठः। युक्तश्चायं, सौरमन्त्रपदेनैव सूर्यगायत्र्याः सङ्ग्रहात्। अत एव तृचमन्त्राणां पार्थक्येन ग्रहणे न्यायसिद्धफलाधिक्यानुवादकं 'विशेषतः' इति पदम्।

अत्र तान्त्रिकाङ्गकलापसम्मेलनेन होमप्रयोगः क्वचिदुपलभ्यते। तस्य च व्यवस्थाऽस्माभिः पूर्वमेवाभिहिता। तदभावे तु स्वस्य गृह्योक्तविधिना आज्यभागान्तं हुत्वा मध्ये प्रकृतहोमं यावत्सङ्ख्यं समाप्य स्विष्टकृदादिशेषं समापयेत्। "आघारान्तं विधिं कृत्वा न्यासं कृत्वा तु पूर्ववत्" इति **शौनक**वाक्ये तु आङ्प्रश्लेषः। आघारयोरन्तौ आज्यभागौ। तावभिव्याप्य यो विधिस्तमित्यर्थः। न्यासानां वाऽयं कालविधिः। आघारानन्तरं न्यासास्तत आज्यभागावित्यर्थः। "सर्वेषु पाकयज्ञेषु आज्यभागौ कृताकृतौ" इति वचनात् आज्यभागा भावपरं वा।

ततो होमावसाने तु भक्त्याऽऽचार्यं प्रपूजयेत्।
गन्धैः पुष्पैस्तथा वस्त्रैरलंकारादिभिस्तथा॥

एवं सम्पूज्य गां दद्यात्सवत्सां कांस्यदोहिनीम्।
सवस्त्रां सहिरण्यां च श्रीमद्भास्करतुष्टये॥

उपानहौ च छत्रं च आसनं च कमण्डलुम्।
आचार्याय प्रदातव्यं सर्वकामार्थसिद्धये॥

ततोऽर्घ्यपात्रसहितं मूर्तिदानम। तत्र मन्त्रः—

भास्करप्रतिमां विप्रबुध्या सौवर्णनिर्मिताम्।
सवस्त्रां च सपीठां च उपचारैः सुपूजिताम्॥

अर्घ्यपात्रेण सहितां दक्षिणासहितामपि।
भास्करप्रीतये तुभ्यं ददे सर्वार्थसिद्धये॥

भास्करः प्रतिगृह्णाति भास्करो वै ददाति च ।
तस्मादस्य प्रदानेन भास्करो मे प्रसीदतु ।। इति ।

अथ प्रतिग्रह मन्त्रः ।

" देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां श्रेयसे प्रतिगृह्णामि "

श्रीसूर्यः प्रतिगृह्णाति श्रीसूर्यः प्रददाति च ।
उभयोस्तारकः सूर्यः श्रीसूर्याय नमो नमः ।।
दानेनानेन सुप्रीतस्त्वां मां चावतु भास्करः ।। इति ।

ततो ब्राह्मणांस्तर्पयेत् । तच्च प्रक्षेपसहस्रांशरूपम् । तदसम्भवे तदयुतांशरूपं वा । "नमस्कृतिशतांशेन कुर्याद्ब्राह्मणभोजनम्" इत्यर्घ्यप्रकरणे **भविष्योत्तर**वचनात् । अर्घ्याङ्ग-नमस्कारस्य होमसमसङ्ख्यहोमदशाङ्गभेदेन विकल्पितत्वात् ।

अथानयोर्होमयोः कालविशेषः ।

ज्योतिर्विदादिष्टे दिवसे वह्नेर्भूलोकस्थितिसत्त्वे सौम्यग्रहमुखपाति होमं कुर्यात् । तत्र वह्निस्थितिनिर्णयो, यथा—

सैका तिथिर्वारयुता कृताप्ता शेषे गुणेऽभ्रे भुवि वह्निवासः ।
सौख्याय होमः शशियुग्मशेषे प्राणार्थनाशौ दिवि भूतले च ।।

शुक्लप्रतिपदमारभ्याभीष्टतिथिपर्यन्तं गणयित्वा तत्रैकमधिकं सम्मेल्य रव्यादितद्दिनीय-वारान्तसङ्ख्यामपि तत्र संयोज्य तदुत्पन्नसङ्ख्यापिण्डस्य चतुर्धा विभागे सति यदा त्रयं शून्यं वाऽवशिष्यते तदा भूमौ वह्नेः सत्त्वात् तद्दिने होमः सौख्याय । एकस्य शेषे स्वर्गे वासो द्विशेषे पाताले वासोऽग्नेस्तदा होमो नेष्ट इत्यर्थः । **ब्रह्मयामले** त्वन्यथोक्तम्—

धृतिश्च तिथिवाराश्च सप्तद्वीपं चतुर्युगम् ।
एकीकृत्य हरेद्भागं त्रिभिः शेषेण पुत्रक ।।

एकेन वसतिः स्वर्गे द्वौ च पाताल एव च ।
शून्ये च मर्त्यलोके स्यादेवं वसति पावकः ।।

उत्पातः स्वर्गलोकस्थे पातालस्थे धनक्षयः ।
वह्नौ च मर्त्यलोकस्थे होमादिष्टफलोदयः ।। इति ।

अत्र तिथिवारसङ्ख्यायां द्वयमधिकं सम्मेल्य त्रिभिर्भागे शून्यशेष इष्टो नान्य इति निष्कर्षः ।

**पुरश्चरणकौस्तुभे** परमगुरुचरणैरुक्तः ग्रहमुखाहुतिपातनिर्णयोऽपि तत्रैव "तेषां स्थितिक्रमं वक्ष्ये" इत्यादि ग्रन्थेन सविस्तरमुक्तः तस्यायं निष्कर्षः। सूर्यनक्षत्रमारभ्य चन्द्र-नक्षत्रमभिव्याप्य गणनया जायमाने सङ्ख्यापिण्डे त्रिभिर्विभक्ते सति यावल्लब्धं तावतीयो ग्रहस्तद्दिनीयः।

एतच्च सङ्ख्यायां निःशेषतायाम्। सावशेषतायां तु लब्धमेकाधिकं कार्यमिति विशेषः। ग्रहाणां च न प्रसिद्धः क्रमः। किन्तु—

भास्करज्ञभृगुमन्दचन्द्रमो—
भूमिपुत्रगुरुराहुकेतवः।

इत्येवंरूपः।

सौम्या देवगुरुभार्गवेन्दवः
सौम्यकर्मणि शुभाः समीरिताः॥

अभिचारादिक्रूरहोमस्त्वितरग्रहमुखे युक्त इति। प्रकृतहोमस्य सूर्यदैवत्यत्वात् सूर्यमुख एवायं होमो युक्त इति न भ्रमितव्यम्। तथा वचनाभावात्। आभिचारिके त्वितरक्रूर-ग्रहापेक्षया सूर्यमुख एव प्रकृतहोमो युज्यते इति दिक्।

**॥ इति श्रीभास्कररायोन्नीते तृचभास्करे होमविधिः॥**

## ॥ अथ नमस्कारः॥

"दण्डवत्प्रणमेद्भानोरर्घ्यदानक्रमेण हि" इत्यादिना विहितः। भानोरिति कर्मणि षष्ठी। "अस्मार्षीज्जलनिधिमन्थनस्य शौरिः" इतिवत्। सोऽप्यङ्गभूतः प्रधानभूतश्चेति द्विविधः। अङ्गभूतस्तु होमसमसङ्ख्याको होमदशांशो वा। अत्रापि होमवदेव दशांशकल्पना कृताकृतता च बोध्या। आभिचारिकप्रयोगे तु होमनमस्कारौ कर्तव्यावेवेति। होमदशांशस्तु होमोत्तर-कालिकः। होमसमसङ्ख्यस्तु होमात्पूर्वं उत्तरं वा समकालं वा ब्राह्मणान्तरद्वारा कार्यः।

प्रधाननमस्कारस्तु तत्र तत्र विकल्पितबहुमन्त्रकरणकः स्मर्यते। ते च प्रयोगा इह अप्रतिज्ञातार्थत्वान्नोच्यन्ते। तृचकरणकस्तु पूर्वोक्तयावद्विस्तरविशिष्टोऽभ्युदयाधिक्यकारी। यदङ्गोत्तरमर्घ्यारम्भस्तदङ्गोत्तरमेवार्घ्यस्थाने नमस्कारारम्भ अर्घ्यदानाव्यवहितपूर्वकालीनः। करशुद्धिन्यासस्तु नात्र कार्य इति विशेषः। मन्त्रास्तु मित्राय नमः इत्यन्ता एव। न पुनरग्रे पल्लवान्तरविशिष्टाः। अत्र च दण्डवदित्युक्तिः सर्वविधनमस्काराणामुपलक्षणम्। तथा हि। नमस्कारस्तावत् कायिको वाचिको मानसिकश्चेति त्रिविधः। एकैकः पुनरुत्तममध्यमाधमभेदा-

त्रिविधः । कायिकस्तु प्रकारान्तरेणापि सप्तविधः । त्रिकोणषट्कोणार्धचन्द्रप्रदक्षिणदण्डाष्टाङ्गोग्र-भेदात् । एवं संहत्य षोडशविधः । क्रमेण लक्षणानि । यथा **कालिकापुराणे**—

जानुभ्यामवनिं गत्वा शिरसा स्पृश्य मेदिनीम् ।
क्रियते यो नमस्कार उत्तमः कायिकश्च सः ॥

जानुभ्यां क्षितिमस्पृष्ट्वा शिरसा स्पृश्य मेदिनीम् ।
क्रियते यो नमस्कारो मध्यमः कायिकश्च सः ॥

पुटीकृत्य करौ शीर्षे दीयेते चेद्यथा तथा ।
अस्पृष्ट्वा जानुशीर्षाभ्यां क्षितिं सोऽधम उच्यते ॥

या स्वयं गद्यपद्याभ्यां घटिताभ्यां नमस्कृतिः ।
क्रियते भक्तियुक्तेन वाचिकेषूत्तमो हि सः ॥

पौराणिकैर्वैदिकैर्वा मन्त्रैर्मध्यमवाचिकः ।
भाषयैव नमस्कारः कथितो वाचिकोऽधमः ॥

इष्टमध्यानिष्टगतैर्मनोभिस्त्रिविधं पुनः ।
नमनं मानसं प्रोक्तं उत्तमाधममध्यमम् ।
त्रिविधे च नमस्कारे कायिकश्चोत्तमः स्मृतः ॥

अत्र मानसिकत्वे मनस इष्टगतत्वं नाम अमुकफलविशेषो मे सम्पद्यतामित्याकारक-चित्तवृत्तिवैशिष्ट्यम् । मध्यगतत्वं नाम इष्टं मे सम्पद्यताम् इत्याकारकेष्टसामान्यावगाहि चित्त-वृत्तिवैशिष्ट्यम् । न पुनरिष्टानिष्टोभयोदासीनवृत्तिवैशिष्ट्यम् । तस्य निष्कामान्तःपातित्वेन उत्तमोत्तमावश्यंभावात् । अत एव न इष्टादिगतत्रयस्य उत्तममध्यमाधमत्रयस्य च यथासङ्ख्य-न्यायेन संज्ञासंज्ञिभावः । न चैवं नमस्कारस्य षोडशविधत्वभङ्गः । त्रयोदशानामप्यार्तिनिरा-सार्थकत्वेन ज्ञानोद्देश्यकत्वाभावात् । प्रीत्युद्देश्यकत्ववत् सर्वौदासीन्यवद्वृत्तिभेदेन प्रातिस्विकं पञ्चविधत्वस्य इष्टत्वात् । मानसे त्रिविधे तदसम्भवात् । संहत्य अष्टषष्टिर्भेदा इति **भक्तितन्त्रे** स्पष्टत्वात् ।

त्रिकोणादिव्यवस्थेयं यदि पूर्वमुखोऽर्चयेत् ।
पश्चिमाच्छाम्भवीं गत्वा ततो वह्निदिशं व्रजेत् ॥

पुनश्च पश्चिमां गत्वा नमस्कारस्त्रिकोणवत् ।
यदोत्तरामुखो देवं पूजयेत्साधकस्तथा ॥

दक्षिणाद्वायवीं गत्वा दिशं तस्याश्च शाम्भवीम् ।
ततोऽपि दक्षिणां गत्वा नमस्कारस्त्रिकोणकः ॥

पश्चिमाच्छाम्भवीं तस्या वह्निं तस्माच्च पश्चिमाम् ।
तां त्यक्त्वा राक्षसीं यायात् तस्या यायात्तु वायवीम् ॥
ततः पूर्वां ततो रक्षोगमनं द्वित्रिकोणवत् ।
अथवा दक्षिणाद्वायुं वायव्याः शाम्भवीं व्रजेत् ॥
ततोऽपि दक्षिणां गत्वा तां त्यक्त्वाऽग्नौ प्रविश्य च ।
अग्नितो राक्षसीं गत्वा ततश्चाप्युत्तरां दिशम् ॥
उत्तरात्पुनराग्नेयीं षट्कोणनमनं विदम् ।
पश्चिमाच्छाम्भवीं गत्वा पुनर्दूरेण पश्चिमाम् ॥
गत्वा योऽसौ नमस्कारः सोऽर्धचन्द्रः प्रकीर्तितः ।
यद्वा दक्षिणतो वायुं ततो दूरेण दक्षिणाम् ॥
गत्वा नमस्कृतिर्या सा अर्धचन्द्राकृतिर्मता ।
सकृत्प्रदक्षिणं कृत्वा वर्तुलाकृति साधकः ॥
नमस्कारः कथ्यतेऽसौ प्रदक्षिण इति द्विजैः ।
त्यक्त्वा स्वमासनस्थानं पश्चाद्गत्वा नमस्कृतिः ॥
प्रदक्षिणमकृत्वैव निपत्य भुवि दण्डवत् ।
दण्ड इत्युच्यते देवैः सर्वदेवौघमोदकृत् ॥
पूर्ववद्दण्डवद्भूमौ निपत्य हृदयेन तु ।
चिबुकेन मुखेनाथ नासाग्रेणालिकेन च ॥
ब्रह्मरन्ध्रेण कर्णाभ्यां यद्भूमिस्पर्शनं क्रमात् ।
सोऽष्टाङ्ग इति सम्प्रोक्तो नमस्कारो मनीषिभिः ॥

अत्र क्रमादित्युक्त्या हृदयादिकर्णान्तानां भूमिस्पर्शे क्रमो विवक्षितः । कर्णयोर्दक्ष आदिस्ततो वाम इति क्रमः ।

इत्थं चोर्ध्वबाहुर्दण्डवन्निपत्य हृच्चिबुकमुखनासाललाटमध्येन भुवं स्पृष्ट्वा किञ्चिदुत्थाय जानुभ्यामवनिं गत्वा ब्रह्मरन्ध्रेण कर्णाभ्यां च भूस्पर्श एको नमस्कार इति सिध्यति । **ग्रन्थान्तरे** तु—

" उरसा शिरसा दृष्ट्या वचसा मनसा तथा ।
पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः ॥ "

क्वचिज्जानुपदस्थाने कर्णाभ्यामिति पाठः । तत् द्वयमपि कायिकविषये वचोमनसोर्मेलनस्यायुक्तत्वात् अङ्गसङ्ख्याविक्येन अष्टाङ्गत्वायोगाच्च नातीवयुक्तमिवेति **कालिकापुराणोक्तिरेव** साधीया ।

जानुद्वयं शिरो हस्तद्वयं चेत्यङ्गपञ्चकम् ।
भूमिस्पर्शयुतं स्त्रीणामष्टाङ्गं तु निषिध्यते ॥

प्रदक्षिणत्रयं कृत्वा वर्तुलाकृति साधकः ।
ब्रह्मरन्ध्रेण संस्पर्शः क्षितेर्यः स्यान्नमस्कृतौ ॥

स उग्र इति देवौघैरुच्यते विष्णुतुष्टिदः ।
त्रिकोणस्त्रिपुराप्रीत्यै षट्कोणः शिवतुष्टिदः ।
अष्टाङ्गो भास्करप्रीत्यै उग्रो नारायणप्रियः ॥

अत्रैकैकैकनमस्कारप्रियत्वेऽपि अन्यस्य न निषेधः । न हि शाकप्रियः पार्थिवः ओदनं द्वेष्टि । अत एव—

"उपवासप्रियो विष्णुरभिषेकप्रियः शिवः ।
दुर्गाऽर्चनप्रिया नूनं मार्तण्डो नतिवल्लभः ।
दीपप्रियः कार्तवीर्यो गणेशस्तर्पणप्रियः ॥" इति ।

**वचनात्त**त्तदितराङ्गानि तेषां नाप्रियाणि । अपि तु सर्वाङ्गप्रियत्वेऽविशिष्टेऽपि तस्य तस्य देवस्य तस्मिन्नङ्गे प्रीत्याधिक्यमात्रबोधनेन तत्रात्यन्तादरणीयत्वार्थक एषोऽर्थवादः । अत एव क्वचित् 'स्तुतिप्रियो वासुदेवः' इति 'अलङ्कारप्रियो विष्णुः' इति च स्मर्यते । उपवासवाक्येन इतरपरिसङ्ख्याने तु—एतन्न सिध्येत् । अत एव च "मार्तण्डो नतिवल्लभः" इत्यस्य "अष्टाङ्गो भास्करप्रीत्यै" इत्येतेन नोपसंहारः ।

इत्थं च, यद्यपि सर्वे नमस्कारविशेषा विकल्पेनानुष्ठातुं शक्यन्ते तथाऽपि प्रकृतेऽष्टाङ्ग एव आचारसिद्धो ग्राह्यः । सोऽपि चाष्टाङ्गः प्रदक्षिणसहित उग्रनतिसहितस्ताभ्यां पार्थक्येन मिलिताभ्यां वा सम्पुटितो भक्त्यतिशयेन क्रियमाणोऽप्याचारानुमतत्वादेव न दुष्यति ।

एतत्फलं तु **ब्रह्मपुराणे** सूर्यं प्रस्तुत्य—

निपत्य शिरसा भूम्यां नमस्कारं करोति यः ।
तत्क्षणात् सर्वपापेभ्यो मुच्यते नात्र संशयः ॥

तत्रैव स्थलान्तरे—

मानसं वाचिकं वापि कर्मजं यच्च दुष्कृतम् ।
सर्वं सूर्यः प्रणामेन तदशेषं व्यपोहति ॥

भुक्तिमुक्तिप्रदा योऽसौ रवेः कुर्यात्प्रदक्षिणाम् ।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुंधरा ॥
सूर्यं मनसि च कृत्वा कुर्याद्यस्तु प्रदक्षिणाम् ।
प्रदक्षिणीकृतास्तेन सप्तद्वीपा भवन्ति हि ॥

॥ इति नमस्कारः ॥

## ॥ अथ सौरव्रतान्तराणि ॥

ब्रह्मपुराणे—

एकाहारो नरो भूत्वा षष्ठ्यां योऽर्चयते रविम् ।
नियतव्रतचारी च भवेद्भक्तिसमन्वितः ॥
सप्तम्यां वा महाभागः सोऽश्वमेधफलं लभेत् ।
अहोरात्रोपवासेन पूजयेद्यस्तु भास्करम् ॥
अग्निप्रभेण यानेन सूर्यलोकं स गच्छति ।
सप्तम्यामुत षष्ठ्यां वा स याति परमां गतिम् ॥

इदमेकमेव व्रतम् । तत्र तिथ्योर्विकल्पः । एकाहारोपवासयोस्तु फलभेदेनानुष्ठानम् ।

कृष्णपक्षस्य सप्तम्यामुपवासी जितेन्द्रियः ।
सर्वरत्नोपहारेण पूजयेद्यस्तु भास्करम् ॥
पद्मप्रभेण यानेन सूर्यलोकं स गच्छति ।
शुक्लपक्षस्य सप्तम्यां उपवासपरो नरः ॥
सर्वशुक्लोपहारेण पूजयेद्यस्तु भास्करम् ।
सर्वपापविनिर्मुक्तः सूर्यलोकं स गच्छति ॥

इमे द्वे व्रते । आग्नेययोरिवोत्पत्तिविशिष्टकालरूपगुणाद्भेदः ।

शुक्लपक्षस्य सप्तम्यां यदादित्यदिनं भवेत् ।
सप्तमी विजया नाम तत्र दत्तं महाफलम् ॥
स्नानं दानं जपो होम उपवासस्तथैव च ।
सर्वं विजयसप्तम्यां महापातकनाशनम् ॥

इदं विहितकर्माङ्गत्वेन प्रशस्तिका, न विधानम् ।

" अर्कपुटकसंयुक्तमुदकममृतं पिबेत् ।
क्रम·······चतुर्विंशदेकैकं क्षपयेत्ततः ॥
द्वाभ्यां संवत्सराभ्यां तु समाप्तनियमो भवेत् ।
सर्वकामप्रदा ह्येषा प्रशस्ता ह्यर्कसप्तमी ॥

अर्कपत्रपुटपरिमितजलमात्रमेवाहारः । मासे······· शु मासीय पत्रपुटसङ्ख्याया आवृत्तिः । शुक्लसप्तम्यामारम्भः तत्सन्दंशे पठितत्वात् ।

उदयास्तमयं यावत् तिष्ठत्सूर्यं विलोकयन् ।
जपन्नभिमुखं किञ्चिन्म···············नरः ।
आदित्यव्रतमेतत्तु महापातकनाशनम् ॥

इत्यादीति दिक् ॥

॥ इति श्रीभास्कररायेण प्रणीते तृचभास्करे सूर्यनमस्कारविधिः ॥

---

## ॥ यन्त्रधारणम् ॥

### ॥ अथ धारणमात्रेण रोगनाशनफलकयन्त्रप्रकारादिः ॥

स चोक्तो यन्त्रसारे—

प्रणवं साध्यसमेतं विलिख्य षट्कोणकर्णिकामध्ये ।
ॐ ह्रीं हंसः सोऽहं षड्वर्णानालिखेच्च कोणेषु ॥

केसरविलसत्सौरचतुर्वर्णे दलचतुष्टये चापि ।
उद्यन्नद्येत्यस्या पादचतुष्कं तृचोऽष्टपत्रे च ॥

सौराष्टाक्षरकेसरभाजि शुकेषूदगाद्यचोरष्टौ ।
पादानालिख्य बहिर्मातृकयाऽऽवेष्टय कुगृहकोणेषु ॥

विलिखेत्सौरस्य चतुर्वर्णस्यैकैकमक्षरं क्रमशः ।
एतद्यन्त्रं कुष्टज्वरशूलाद्यान् विनाशयेद्रोगान् ।
विधृतं प्रथयति तेजोलक्ष्मीशोभाधृतिप्रतापाद्यान् ॥

अङ्गणभूमावेतद्रजोभिरालिख्य तत्र दिननाथम् ।
सम्पूज्यार्घ्यं दद्याद् लक्ष्म्यै कुष्टज्वरादिनाशाय ॥

रोगघ्नयन्त्रमिदमेव विलिख्य ताम्रे
संस्थापितं निजगृहे विधिवत्प्रपूज्य ।
हन्याच्च कुष्टमुखरोगपरम्पराश्च
विस्मृत्यपस्मृतिभवानथवा विकारान् ॥

आलिख्य चैतत्कलधौतपट्टे
तैले विनिक्षिप्य सहस्रसङ्ख्यम् ।
जप्त्वा तदभ्यक्ततनोर्नरस्य
कुष्टादिरोगा विलयं प्रयान्ति ॥

इदमेव विलिख्य यन्त्रवर्यं
नवनीते त्रितयं प्रजप्य चर्चा ।
परिभक्षयतां तदैव शूलं
विषमं जाठरमाशु नाशमेति ॥

आदौ षट्कोणं वृत्ताढ्यं चतुर्दलपद्मं वृत्ताढ्यं अष्टदलपद्मं शुद्धवृत्तं चतुरस्रं चेति यन्त्रं विलिख्य । मध्ये प्रणवं विलिखेत् । अयं च प्रणवो यन्त्रसामान्यन्यायसिद्धसाध्यादिगर्भीकारेण लिखितं ह्रींकारमावेष्ट्य लेख्यः । कोणषट्के ॐ ह्रीं हंसः सोहं इति वर्णान्, चतुर्दलकेसरेषु ॐ ह्रीं हं सः इति सौरचतुर्वर्णान्, चतुर्षु दलेषु पूर्वादिक्रमेण उद्यन्नद्येत्यादीन् चतुरः पादान् । अष्टदलकेसरेषु "घृणिः सूरिय आदित्यः" इति सौराष्टाक्षराणि । अत्र सूर्यपदे विकर्षः, सूर्य इति त्रीणीति श्रवणात् । अष्टसु दलेषु तु शुकेषु मे इत्यस्या, उदगादयमित्यस्या ऋचश्चाष्टौ पादान् । तद्बहिर्वृत्तं मातृकाभिर्वेष्टयेत् । इदं च मातृकाभिर्वेष्टनं यन्त्रसामान्यविधिसिद्धमेवानूदितम् । चतुरस्रकोणेषु सौरांश्चतुर्वर्णान् पूर्वोक्तानेव विलिखेत् ।

यन्त्रसामान्यविधिः सर्वोऽप्यत्र योजनीयः । स चानुपदमेव वक्ष्यते ।

एवं यन्त्रं सिद्धं विधृतं चेत् कुष्टादिनाशकं तेजोलक्ष्म्यादिवृद्धिकरं च । अथवा समायां अङ्गणभूमौ हरिद्रादिचूर्णं प्रसार्य तत्रेदं विलिख्य तत्र सूर्यमावाहनादिभिः सम्पूज्य तत्रोक्तरीत्या तृचेनार्घ्यं दद्यात् । फलं तु पूर्वमभिहितमेव ।

अथवा ताम्रादौ यन्त्रमिदं विलिख्य गृहे निखन्यात् । रोगशान्तिः । यद्वा सुवर्णपट्टे विलिख्य साधितं यन्त्रं तैले निक्षिप्य तत्तैलं स्पृशन् तृचं जपेत्सहस्रवारम् । तदभ्यज्यात् । कुष्टादिशमनं भवति । यद्वा नवनीते विलिख्य तदभिमन्त्रयेत् । सङ्ख्यानुक्तौ सहस्रमिति तान्त्रिकपरिभाषया सहस्रवारम् । सहस्रसङ्ख्यापदस्यानुवृत्तिर्वा । तद्भक्षणेन उदरशूलनाशः । इति समुदायार्थः ।

तत्र अर्घ्यं दद्यादित्युक्ते प्रयोगे अर्घ्यदानं नाम तन्त्रेषु तत्र तत्रोक्तं सौरमर्घ्यदानमेव ग्राह्यं, न तु पूर्वोक्तम् । तृचार्घ्यपद्धतिप्रणेतृभिः कैरप्यस्य यन्त्रस्य तद्विषये अनुल्लेखादित्याहुः । तच्चार्घ्यदानं प्रयोजनतिलकाख्यसौरमन्त्रकरणं, सौराष्टाक्षरकरणकं चेति द्विविधम् ।

तत्राद्यं यथा—ह्रां ह्रीं सः इति त्र्यक्षरः प्रयोजनतिलकाख्यः सौरमन्त्रः । द्वादशलक्ष-जपात् आज्यसिक्तान्नैस्त्रिमधुराप्लुततिलैर्वा द्वादशसहस्रहोमात् सिद्धिरस्य । अस्य श्री प्रयोजन-तिलकाख्यसौरमन्त्रस्य देवभागाय ऋषये नमः । गायत्रीछन्दसे नमः । आदित्याय देवतायै नमः । ह्रां बीजाय नमः । सः शक्तये नमः । ह्रीं कीलकाय नमः । हृल्लेखाषड्दीर्घैः षडङ्गानि । ह्रां गुह्यादिपादतलान्ताय नमः । ह्रीं कण्ठादिगुह्यान्ताय नमः । सः मूर्धादिकण्ठान्ताय नमः । इति वर्णन्यासः । एवं न्यासचतुष्टयं कृत्वा ध्यायेत् ।

रक्ताम्भोजस्थितो रक्तो रक्ताम्भोरुहभूषणः ।
वराभयकरः सूर्यस्त्रिनेत्रो बिम्बमध्यगः ॥

अब्जबिम्बमुद्रे दर्शयेत् ।

## ॥ अथ पूजा ॥

सा च जलपूर्णे कलशे । ततस्तेनैव जलेनार्घ्यदानमिति विशेषः । मूलमन्त्रेणैव सर्वोपचाराः । पीठपूजातः पूर्वमेव अग्न्यादिदिक्चतुष्टये अश्रिषु मध्ये च षडासनदेवता यजेत् । प्रभूतायै० विमलायै० सारायै० समाराध्यायै० योगायै० परमसुखायै० । ततो गुरुगणपत्यादिकमारभ्य रः सर्वतोमुख्यै नमः इति पीठशक्त्यन्तं सम्पूज्य । ब्रह्माविष्णुशिवात्मकसौरयोगपीठाय नमः । ह्रल्लेखाकमलासनाय नमः । इत्याभ्यामासनं प्रक्षिप्य । ध्यानावाहनादिपुष्पपूजान्तं कृत्वा । षडङ्गशक्तिभिः प्रथमावरणम् । सोमाद्यष्टग्रहैर्द्वितीयावरणम् । इन्द्रादिकलोकपालैस्तृतीयावरणं च सम्पूज्य । धूपदीपादिपूजां समाप्य । गोरोचनादिद्रव्यैः अनेनैव मन्त्रेणार्घ्यं दद्यात् । अर्घ्येतिकर्तव्यता सर्वा पूर्ववदेवोन्नेया ।

## ॥ इति प्रयोजनतिलकार्घ्यः ॥

द्वितीयं यथा—

अस्य श्रीसौराष्टाक्षरमन्त्रस्य देवभागगायत्र्यादित्या ऋष्यादयः । ॐ बीजम् । ह्रीं शक्तिः । ॐ सत्यतेजो ज्वलज्ज्वालामणि हुं फट् इत्येको मन्त्रः । अत्रैव सत्यपदस्थाने ब्रह्माविष्णुरुद्रवह्निसर्वपदानामेकैकशो मेलने अन्येऽपि पञ्चेति षण्मन्त्राः । एतैर्जातियुक्तैः षडङ्गानि । ध्यानम्—

अरुणोऽरुणपङ्कजे निषण्णः कमले द्वे अभयं वरं दधानः ।
स्वरुचाहितकुण्डलस्त्रिनेत्रो रविराकल्पशतावृतोऽवतान्नः ॥

ॐ घृणिः सूर्य आदित्यः इति मन्त्रः । अयमेव श्रीबीजान्त इति केचित् । अयं श्रीकामह्रल्लेखासम्पुटितोऽन्ते प्रयच्छ मे लक्ष्मीं इत्थं पल्लवितः शङ्कराचार्यसम्मतः । षड्विधाः सौरास्तु "घृणिः सूर्य आदित्यों" इति प्रणवष्टेरित्येतत्सूत्रोक्तसमानलक्षणकं पठन्ति इत्युक्तं शङ्करविजये ।

अष्टलक्षजपात् त्रिमधुरसिक्तक्षीरद्रुमसमिद्भिराज्यसिक्तान्नैर्वाऽष्टसहस्रहोमात् सिद्धिरस्य ।

## ॥ अथ न्यासः ॥

अं आदित्याय नमः । इं रवये नमः । उं भानवे नमः । ऋं भास्कराय नमः । ऌं सूर्याय नमः । एं मूर्तये नमः । इति शिरोमुखहृद्गुह्यचरणे । ॐ घृं नमः शिरसि । ॐ णिं नमः मुखे । ॐ सूं नमः कण्ठे । ॐ रिं नमः हृदि । ॐ यं नमः उदरे । ॐ आं नमः नाभौ । ॐ दिं नमः शिखायाम् । ॐ त्यं नमः पादयोः ।

## ॥ अथ पूजा ॥

प्रथमावरणान्तं प्रयोजनतिलकवत् । मध्ये आदित्याय नमः । प्रागादिदिक्षु रवये भानवे भास्कराय सूर्याय । आग्नेयादिविदिक्षु उषायै प्रज्ञायै प्रभायै सन्ध्यायै । इति द्वितीयावरणम् । अरुणाय नमः इत्यादौ, ततो ब्राह्माद्यः सप्त । इति तृतीयावरणम् । शशिने सूर्यपारिषदे नमः । बुधाय सूर्यपारिषदे नमः । इत्यादिरीत्या शशिबुधगुरुशुक्राः दिक्षु । भौममन्दराहुकेतवो विदिक्षु पूज्या इति चतुर्थावरणम् । इन्द्रादिभिः पञ्चमम् । पूजाशेषं समाप्य ।

अर्घ्यपात्रं पूजितजलेनापूर्य अक्षतयवकुशदूर्वातिलसर्षपकुसुमचन्दनानि निक्षिप्य आकाशे सावरणं भास्करं अभिध्याय मण्डलं दृष्ट्वा धृतार्घ्यपात्रोऽष्टोत्तरशतं जप्त्वा पुनः पात्रं सम्पूज्य जानुभ्यामवनिं गत्वा पात्रमामस्तकमुद्धृत्य मण्डलस्थदृष्टिचित्तो अङ्गणस्थतृचयन्त्रे अर्घ्यं दत्त्वा पुष्पाञ्जलिं समादाय अष्टोत्तरशतं मन्त्रं जप्त्वा सूर्याय समर्प्य अर्घ्यजलेनात्मानमवसिच्य प्रणमेत् । एवं नित्यमर्कवारे वा कुर्यात् ।

## ॥ इत्यष्टाक्षरार्घ्यः ॥

अन्येऽपि पुराणतन्त्रभेदेनार्घ्यविशेषाः श्रूयमाणाः फलसंयोगात्स्वतन्त्रकर्माणि । यत्तु **ब्रह्मपुराणे** "अर्घ्येण सहितं कर्म सर्वं साङ्गं भवेद् द्विज" इति वचनं तदेतेषामेव कर्मणां पूर्वोक्तसौरव्रतादिरूपाणि अर्कसप्तमीप्रभृतीनि प्रति अङ्गत्वेन प्रयोगविधायकं, येन कर्मणेत्यादिवत् । तेन सर्वेषामर्घ्याणामवेष्टिवत् द्विविधः प्रयोगः । यद्यपि तत्र—

"रक्तचन्दनसम्मिश्रैः रक्तपुष्पैः शुचिर्नरः ।
उदयेऽर्घ्यं सदा दत्त्वा सिद्धिं संवत्सराल्लभेत् ॥" इति

सांवत्सरिकप्रयोगस्यैव ततः पूर्वमुपक्रमो, नार्घ्यान्तरस्य, तथाऽपि तत्रेतिकर्तव्यतान्तरानाम्नानात् विनिगमनाविरहेण क्लृप्तेतिकर्तव्यताकानां सर्वेषामेवार्घ्यकर्मणां फलविशेषोद्देशेन संवत्सरपर्यन्तमावृत्तिविधिर्दाक्षायणयज्ञवदिति सर्वेषामेवोपक्रान्तिरविशिष्टा । यस्यार्घ्यविशेषस्य यत्कर्मविशेषं प्रतिअङ्गत्वे बहुप्रमाणबाधः तावन्मात्रस्य द्विविधप्रयोगाभावेऽपि न दोषः । अर्घ्येण सहितमिति वचनस्य अर्घ्यान्तरपरत्वेनापि प्रामाण्योपपत्तेरिति दिक् ।

अथ प्रसङ्गात् सौराष्टाक्षरयन्त्रमुच्यते ॥

यन्त्रसामान्यन्यायसिद्धं साध्यनामादिलेखनाय पर्याप्तं स्थलं विचार्य तावन्तं स्थूलं ह्रींकारं विलिखेत् । तदुदरे वक्ष्यमाणरीत्या साध्यनामादि । ह्रींकारमप्यावेष्ट्य प्रणवं लिखेत् । तदुपरि

त्रिकोणम् । कोणत्रये ह्रींकारान् । तद्बहिरष्टदलपद्मम् । तस्य पूर्वादिदलेषु घृं णिं सूं रिं यं आं दिं त्यं इत्येकैकाक्षरं विलिख्य तद्बहिर्मातृकावर्णैर्वेष्टयेत् । तद्बहिर्भूगृहम् । तत्कोणेषु प्रणवं ह्रींकारं च लिखेत् । तत् यन्त्रसामान्यविधिना सम्पातसाधितं धृतं चेदारोग्यप्रदं भवति ।

॥ इत्यष्टाक्षरयन्त्रविधिः ॥

एवं बहुपुराणतन्त्रद्रष्टृभिः अन्यान्यपि सौरकर्माणि सङ्ग्राह्याणि । अस्माभिस्तु दिङ्मात्रं दर्शितम् । सर्वमप्येतद्भावहीनैरतीव साङ्गमपि कृतं शतवारमप्यावृत्तं न फलतीति रहस्यम् । तस्याब्राह्मणत्वादिवदधिकारितावच्छेदकत्वेन तदभावे शूद्रकृतसाङ्गज्योतिष्टोमादित इव फलाभावस्य न्यायसिद्धत्वात् । इममेवार्थं स्पष्टतरमसकृदुद्‌घ्रदयन्ति पुराणान्यखिलानि । तत्र सौरविषये **ब्रह्मपुराण**वाक्यं, यथा मुनीन् प्रति ब्रह्मवचनं—

"अर्घ्यादिनिखिलं कर्म भास्करस्य द्विजोत्तमाः ।
भक्तिं श्रद्धां समाधिं च .... .... .... .... ॥

मनसा भावनं भक्तिरिच्छा श्रद्धेति कीर्त्यते ।
ध्यानं समाधिरित्युक्तं तच्छृणुध्वं समाहिताः ॥" इति ।

भक्तिश्च चित्तवृत्तिविशेषरूपो भगवद्विषयकः परमोऽनुरागः । **भक्तितन्त्रे** सा परानुरक्तिरीश्वरे इत्यधिकरणे भाष्यकारादिभिस्तथैव निर्णयात् । ततः "तत्कथां श्रावयेद्यस्तु भक्तिमान् पूजयेत्तु वा" इत्यादिना

"गच्छन् तिष्ठन् स्वपन् जिघ्रन्नुन्मिषन्निमिषन्नपि ।
यः स्मरेद्भास्करं नित्यं स वै भक्ततरो नरः" ॥

इत्यन्तेन महता प्रबन्धेन कथाश्रवणगुणनामकीर्तनादिरूपा गौणभक्तिः प्रतिपादिता । सा च समाधिश्रद्धार्थमुपयुज्यते । श्रद्धा च गौणभक्तेरङ्गम् । गौण्या तु समाधिसिद्धिरित्याद्यधिकरणेषु तथैव निर्णयात् । तदन्ते तूक्तं—

"पत्रं पुष्पं फलं तोयं यद्भक्त्या समुपाहृतम् ।
प्रतिगृह्णन्ति तद्देवा नास्तिकान् वर्जयन्ति च ॥

शुद्धभावैः कृतं कर्म यथोक्तफलदं भवेत् ।
भावशुद्धिविहीनं चेत् साङ्गमप्यफलं भवेत् ॥"

इति भावशुद्धितारतम्ये फलतारतम्यमप्यस्तीत्याहुः ॥

॥ अथ प्रसङ्गात् **अतीव निष्कृष्य** समस्तयन्त्रोपयोगी–
"**यन्त्रसामान्यविधि**" **रुच्यते** ॥

तत्र—

साध्यसाधककर्माणि लेखनीद्रव्यमक्षरम् ।
स्थानं पीठं प्रयोगादि ज्ञात्वा यन्त्राणि साधयेत् ॥

**इति वचनात्** तानि तान्यङ्गानि ज्ञातव्यानि । तत्र यन्त्रं तावद्द्विविधं पूजापीठयन्त्रं धारणायन्त्रं चेति । आदिशब्देन भूमौ खननिक्षेपादिकं गृह्यते । यद्यपि **श्रीमेरुतन्त्रे** "शालग्रामे मणौ यन्त्रे नित्यपूजां समाचरेत् । इति शालग्रामादित्रयस्य साम्येन पूजापीठतोक्ता, तथापि यन्त्रालाभे एवान्यत् इति बोध्यम् । अन्यथा यन्त्रकलापविधेरेव वैयर्थ्यापत्तेः । यद्वा शालग्रामे मणौ यन्त्राधिकरणत्वेन निर्देशः शालग्रामपाषाणाद्युपरि लिखिते यन्त्रे इत्यर्थः । तदुक्तं **दक्षिणामूर्तिसंहितायां**—

श्रीखण्डरक्तश्रीखण्डश्रीपर्णीसम्भवे पटे ।
यन्त्रं संस्थापयेद्देवि नान्यत्र वरवर्णिनि ॥
ततः कुङ्कुमसिन्दूरैः कार्यं यन्त्रं तु योगिना ।
सौवर्णे रजते ताम्रे स्फाटिके वैद्रुमे तथा ॥
माणिक्ये वा मरकते गोमेदे वा त्रिलोहजे ।
गण्डकीभवपाषणे भूमौ वा यन्त्रलेखनम् ॥ इति ।

अत्र संस्थापनशब्देन लेखनपूर्वकं प्रतिष्ठापनमुच्यते ।

**परे** तु प्रतिष्ठापनादिना सिद्धस्य यन्त्रफलकस्य आस्तरणवस्त्रे समुपवेशनं स्थापनमित्याहुः । एवमेव

फलकायां पटे भित्तौ स्थापयेन्न कदाचन ।
स्थापितं यदि मोहेन लोभादज्ञानतोऽपि वा ॥
कुलं वित्तमपत्यं च निर्मूलयति सर्वथा ॥

इति **स्वतन्त्रतन्त्रवचनेऽपि** स्थापनपदार्थनिर्णयो द्रष्टव्यः ।

त्रिलोहजे इति ।

भागा दश सुवर्णस्य रजतस्य च षोडश ।
भागा द्वादश ताम्रस्येत्येतल्लोहत्रयं मतम् ॥

इत्युक्तलक्षणे इत्यर्थः ।

यावज्जीवं सुवर्णे स्याद्रौप्ये द्वाविंशतिः समाः ।
ताम्रे द्वादशवर्षाणि तदर्धं भूर्जपत्रके ॥

रौप्ये लिखितस्य यन्त्रस्य द्वाविंशतिवर्षोत्तरं पुनः प्रतिष्ठापनादिकमपेक्षितमित्यर्थः । सीसादौ तु न यन्त्रलेखः । "सीसकांस्यादिषु पुनः पूर्वोक्तविपरीतकृत् ।" इति **तन्त्रराजोक्तेः** । **पञ्चमीश्वरी तन्त्रे** ।

स्थूलानुक्तौ भूर्जपत्रे क्षौमे वै तालपत्रके ।
यन्त्रं विलिख्य घुटिकां बद्ध्वा सूत्रेण वेष्टयेत् ॥ इत्यादि ।

## ॥ अथ पीठप्रमाणम् ॥

तच्च विशालता दीर्घता गुरुता घनता चेति चतुर्विधम् । प्राक् प्रत्यङ्मानं विशालता । दक्षिणोत्तरमानं दीर्घता । ऊर्ध्वाधो मानं घनता । तौलनेन गुञ्जादिभिः साम्यं गुरुता । इति विवेकः ।

वैशाल्यदैर्घ्यघनतागुरुता मानमुच्यते ।
पावकाङ्गुलिविस्तारः प्राक्प्रत्यग्दक्षिणोत्तरः ॥
पलप्रमाणं कर्तव्यमर्चापीठं मनोहरम् ।
यवार्धोर्ध्वं प्रकुर्वीत चतुरस्रं समन्ततः ॥" इति ।

पावकशब्दस्त्रित्वसङ्ख्याबोधकः । तेन वैशाल्यदैर्घ्ययोः साम्यमुक्तं भवति । पलप्रमाणं तु—

गुञ्जाभिर्दशभिर्माषैः कर्षो माषैस्तथाऽष्टभिः ॥
चतुर्भिस्तु पलं कर्षैः" इत्युक्तलक्षणम् ।

**अमरोऽपि**, "गुञ्जापञ्चार्धमाषकः ॥
ते षोडशार्धकर्षोऽस्त्री
पलं कर्षचतुष्टयम् ।" इत्याह ।

यत्तु "दशार्धगुञ्जं प्रवदन्ति माषम् । इति पूर्वलिखितवचनं तत्रापि मतभेदेन संज्ञाभेदमात्रम् । परिमाणे तु न फलभेदः । एतेन गुरुतोक्ता । यवार्धोर्ध्वं अर्धयवपरिमिता घनता इत्यर्थः ।

अथावरणादिन्यूनाधिकभावेन वैशाल्यदैर्घ्यमानविशेषा उच्यन्ते । ते च **पुरश्चरणकौस्तुभे** परमगुरुचरणैः प्रदर्शिताः—

अङ्गुष्ठपर्वमात्रा स्यात्पीठिकैकाक्षरस्य च ।
एकावरणदेवस्य फलकोऽङ्गुष्ठमात्रकः ॥
कनिष्ठाङ्गुलिमानोऽसावावृतिद्वितयस्य च ।
आवृतित्रययुक्तस्य मात्राऽनामिकसम्मिता ॥
चतुःपञ्चावृतेः पीठं मध्यमाङ्गुलिसम्मितम् ।
षट्सप्तावृतिदेवस्य यन्त्रं पञ्चाङ्गुलं भवेत् ॥
अष्टावरणदेवस्य तिर्यगूर्ध्वं षडङ्गुलम् ।
ततो नवावृतिमुखयन्त्रपीठस्य तत्क्रमात् ॥
अर्धाङ्गुलक्रमेणैव दीर्घविस्तारमीरितम् ॥ इति ।

गुरुताविशेषो, यथा—

एकावरणयन्त्रस्य चाष्टपृश्निप्रमाणकम् ।
द्वितीयावृतिमुख्यानां यन्त्राणां विविधात्मनाम् ॥
पृथक् पृथक् चतुःपृश्निप्रमाणमधिकं भवेत् ॥

घनतायां तु नैव विशेषः । पावकाङ्गुलीति पूर्वोक्तं लक्षणं तु विशेषलक्षणातिरिक्तस्थले द्रष्टव्यम् । यथा निरावरणदैवते, धारणादियन्त्रे च ।

अतिसूक्ष्ममतिस्थूलमतिमात्रममात्रकम् ।
न कल्पयेद्यन्त्रपीठं सर्वकर्मसु यन्त्रवित् ॥
उक्तमानमशेषाणां यन्त्राणां पीठमुच्यते ।
उक्तान्न्यूनमसिध्यै स्यादधिकं निष्प्रयोजनम् ॥
कल्पयेन्नाधिकं न्यूनं मन्त्री यन्त्रासनं क्वचित् ।
अच्छिद्रमभितोऽभिन्नं सद्यः पीठं फलप्रदम् ॥
पीठं निर्माणकाले तु भवेद्यदि सुलक्षणम् ।
सद्यः फलन्ति यन्त्राणि नान्यथा यत्नकोटिभिः ॥

**अथ लेखनम् ।** लेखनाभ्यासशीलस्तु लिखेद्यन्त्राणि नापरः ।

सुदिने शुभनक्षत्रे सुदेशे शल्यवर्जिते ।
वश्याकृष्टौ लिखेत्पुष्येऽहिभे विद्वेषणे स्मृतम् ।
आर्द्रायां मारणं प्रोक्तं मघासूच्चाटनं मतम् ॥
लेखन्या च लिखेद्यन्त्रं वश्ये दूर्वाङ्कुरोत्थया ।
आकृष्टौ तु करञ्जोत्था मारणे तु नरास्थिजा ॥

स्तम्भकर्मणि विज्ञेया राजवृक्षोद्भवा तथा ।
शान्तिके पौष्टिके चैव आयुःकामविधौ तथा ॥

सर्वोपशमने चैव कर्तव्या जातिसम्भवा ।
हेमजा रौप्यजा वापि ताम्रजा त्रपुलोहजा ॥

अपामार्गोद्भवा वाऽपि शुभकर्मणि सिद्धिदा ।
अशुभेषु च सर्वेषु शस्यते तीक्ष्णलोहजा ॥

विष्टयङ्गारदिने घोरे यदि चोत्पादिता तु सा ।
कालदण्डसमा ज्ञेया सर्वशत्रुनिकृन्तनी ॥

इति शल्यमस्थि । अहिभं आश्लेषा । राजवृक्षः आरग्वधः । तीक्ष्णलोहः पोलाद इति भाषया प्रसिद्धः । विष्टिर्भद्राख्यं करणम् ।

सशिष्यस्तत्र चाचार्यः शिष्यो वा गुरुभावितः ।
स्नातः शुक्लाम्बरधरः पुष्पचन्दनभूषितः ॥

प्राङ्मुख उदङ्मुखो वोपविश्य प्रणम्य च ।
गुरुं विघ्नेश्वरं देवं ततो यन्त्रं समालिखेत् ॥

तथा **सौत्रामणि तन्त्रे**—

चन्दनागुरुकर्पूरकस्तूरीरोचनान्वितः ।
मदः करिभवो लाक्षारसः कुङ्कुमसंयुतः ॥

यन्त्रस्य लेखने द्रव्यं क्रूरे चाष्टविषाणि च ॥

अत्र च चन्दनादिपञ्चकयुक्तो गजमद एकं द्रव्यम् । कुङ्कुमयुक्तो लाक्षारसोऽपर-द्रव्यम् । अष्टविषाणि, यथा—

लवणोषणमेहाम्बुगृहधूमाग्निसंयुतः ।
श्मशानगाङ्गारलोध्रनिर्यासा विषमीरितं ॥

ऊषणमूषरः । मेहाम्बु प्रस्रवः । अग्निश्चित्रकः । अभिचारोपयोगि विषाष्टकं तु **मन्त्रमहोदधौ**—

पिप्पली मरिचं शुण्ठी श्वेताबिम्बश्च चित्रकः ।
गृहधूमोन्मत्तरसौ लवणं च विषाष्टकम् ॥ इत्युक्तम् ।

क्वचित्तु गोरोचनमात्रमेव द्रव्यमुक्तम् तथा—

ऋजुरेखा भवेल्लक्ष्मीर्वक्ररेखा दरिद्रता ॥

**अथ लेख्याक्षराणि।** तानि च विंशतिः।

जीवः प्राणो जीवमन्त्रात्ममन्त्रो
शक्तिर्नेत्रे श्रोत्रयुग्मं च जिह्वा।
साध्यः कर्ता कर्म तत्तक्रिया च
द्वे गायत्र्यौ मन्त्रयन्त्रप्रभेदात्॥
प्राणक्षेपो यन्त्रहृद्भूतबीजम्
रक्षावर्णो मातृका भूतवर्णाः।
इत्यङ्गानां विंशतिर्लेखनीया
यन्त्रे यन्त्रे सम्प्रदायानुसारात्॥

यत्तु **क्वचित्** दशाङ्गानीत्युच्यन्ते तदेकत्रानेकेषामनुगमेन अन्तर्भावाभिप्रायेण उपलक्षणपरतया वा नेयम्। यथा—

जीवः प्राणस्तथा शक्तिर्दृष्टिर्वश्यादिकं तथा।
मन्त्रयन्त्रस्य गायत्र्यौ प्राणस्थापनको मनुः॥
भूतदिक्पालबीजानि यन्त्रस्याङ्गानि वै **दश**॥

**अस्यार्थः।** प्रासादपरापदवाच्यमक्षरं हकारसकारौकारबिन्दुविसर्गात्मकं ह्सौः इत्याकारकं यन्त्रस्य जीव उच्यते। स च मध्यबीजादधो लेख्यः।

"ह्सौः यन्त्रस्य जीवः स्यान्मध्यबीजादधो न्यसेत्" इति **वचनात्।** मध्यबीजं तु वक्ष्यमाणं शक्तिबीजमेव। ह्रीं इति। **केचित्तु** जीवबीजमेव मध्यमं मन्यन्ते। तत्पक्षे ह्रींकारस्य न लेखः। साध्यनामादिकं जीवबीजमध्य एव लेख्यम्। तदधः पुनर्जीवबीजं बीजान्तरं न लेख्यम्। पक्षद्वयेऽपि विसर्गयुक्तः सकारोऽन्यो लेख्य इति सम्प्रदायः। प्राण इत्यनेन हंसः सोहं इति मन्त्रोऽभिधीयते। **ग्रन्थान्तरे** तु सः इति वर्णः प्राणः, हंसः इति जीवमन्त्रः, सोहं इत्यात्ममन्त्रः इति व्यवह्रियते।

"जीवात्ममन्त्रौ परितो दिक्चतुष्कोणके लिखेत्" इति **वचनात्।**

कर्णिकान्तर्दिगष्टकं प्रकल्प्य ईशानादिक्रमेण हंकारादीन् लिखेत्। अत्रत्यदिक्पदस्य विदिक्परत्वात्।

"हंसः सोहमितिप्राणमैशान्यादिक्रमान्न्यसेत्।" इति **वचनान्तरेणोपसंहारात्।** अत्र ऐशानी यथास्थितैव। न पुनः पूज्यपूजकमध्यसमीपवर्तिनीति सम्प्रदायः। शक्तिः ह्रीं इति मायाबीजम्। इदं च साध्यसाधकादिनामगर्भीकारेण स्थूलं लेख्यम्। "साध्यं वर्तुलसंस्थाया

हृल्लेखायाः कपोलयोः " इति **लिङ्गात्** । साध्यादीन् आवेष्टय वर्तुलभूताया इति तदर्थात् दृष्टिरिति तु श्रोत्रयोर्जिह्वाया अप्युपलक्षणम् ।

" इं ईं नेत्रे न्यसेत्पार्श्वे उं ऊं श्रोत्रे तथैव च । "

मध्यमबीजस्य पार्श्वयोरित्यर्थः । सकारयकाररेफा, ऊकारश्च सबिन्दुको जिह्वाबीजं स्र्यूं इति । इदं च कर्णिकान्तरधोभागे लिखन्ति । " जिह्वाबीजं पुरो न्यसेत् " । इति **वचनम्** । वश्यादिकमिति, " वश्यं साध्यमिति प्रोक्तम् " । आदिशब्देन साधकक्रियाकर्मणां परिग्रहः । यथा, चैत्रेण देवदत्तस्य वशीकरणार्थं यन्त्रे क्रियमाणे, " चैत्रस्य मम देवदत्तं वशं कुरु कुरु " इति वाक्यप्रयोगः । तेषु कुरु कुरु इति क्रियापदं चैत्रः साधको देवदत्तः साध्यो वशीकरणं कर्म । तल्लेखने तु **बहवः पक्षाः** ।

" षष्ठयन्तं साधकपदं मध्यबीजोपरि स्मृतम् ।
द्वितीयान्तं साध्यमधः पार्श्वयो कुरुयुग्मकम् " ॥

इति **वचनात्** ह्रींबीजस्य शिरसि चैत्रस्येति पदं, तच्च सम्प्रदायान्ममेति पदसहितम । चैत्रस्य मम इति । तस्यैवाधो देवदत्तम् इति । तत्पार्श्वद्वये कुरुपदद्वयम् । अनुक्तमपि हकारेकारयोर्मध्ये वशं इति पदं लेख्यमित्ये**कः पक्षः** पुष्टयारोग्यादिप्रदे यन्त्रे तु पुष्टेरेव साध्यत्वात् तत्स्थाने लेख्यो, मध्ये न किमपि । एवमेव आरोग्यं कुरु कुरु इत्यत्रापि । रोगं नाशयेति पक्षे रोग एव साध्यस्थाने कुरुपदस्थाने नाशयेति । युक्तं तु आरोग्यं कुरु कुरु इति लेखनमेव । वैधक्रियापदप्रयोगलाभात् ।

यद्वा

" स्वनाम चतुर्थ्यन्तं मह्यं पदोत्तरं ततः ।
फलाभिधां द्वितीयान्तां ततो देहीति चाभ्यसेत् ॥ "

चैत्राय मह्यं आरोग्यं देहि देहीति प्रयोगः । अत्रैव ततः कुरु कुरु इति चाभ्यसेत् इति क्वचित् पाठः । चैत्राय मह्यं आरोग्यं कुरु कुरु इति प्रयोगः । यत्र च चैत्रं मां रक्ष रक्ष इति प्रयोगः तत्र बीजाधो न किमपि लेख्यम् । देवदत्ताया मम पुत्रं जीवय जीवयेत्यत्र तु पुत्रं साध्यस्थाने लिखेत् । चैत्रस्य मम शङ्कर प्रसीद प्रसीद इत्यत्र तु शङ्कर एव साध्य इत्यादिकमाहुः । वस्तुतस्तु " चैत्रस्य मम रक्षणं कुरु कुरु ", " देवदत्तायै मह्यं जीवत्पुत्रतां देहि देहि " " चैत्रस्य मम शङ्कर प्रसादं कुरु कुरु " इत्यादिरेव प्रयोगो युक्तः । " षष्ठयन्तं साधकपदं " इत्यादि नियमविध्यनुग्रहलाभात् । तच्च रक्षणपदं हकारेकारमध्य एव लेख्यम् । कर्मकारकवाचित्वात् । " अन्तरग्नि श्रियोः कर्म " इति **वचनात्** । एवमारोग्यादि पदमपि । प्रत्युत **प्राचां पक्षे** आरोग्यादिपदानां देवदत्तादिरूपसाध्यस्थाने लेखने प्रासादपरापदवाच्यजीवबीजस्य मध्यबीजादधो न्यसेदिति वचनेन लेखनीयत्वात् आरोग्यजीवयोः औत्तराधर्ये विनिगमनाविरहः ।

यत्तु पुष्ट्यादेरेव साध्यत्वात् द्वितीयान्तं साध्यमधरिति वचनात् बीजाधो लेखे सिद्धे विनिगमनाविरहः सोढव्य इति, तन्न । साध्यपदस्य पुरुषवाचित्वात् । उभयवाचित्वस्वीकारस्य एकधाधिकरणविरुद्धत्वात् । न चास्मत्पक्षे आरोग्यदयन्त्रे तदभावेऽपि वशीकरणयन्त्रे देवदत्तजीवबीजयोरौत्तराधर्ये विनिगमनाविरह इति वाच्यम् । देवदत्तं वशं इत्युभयोरपि शब्दयोः कर्मत्वाविशेषेण मध्य एव लेख इति तु **वयम्** । यत्तु, " साध्यं वर्तुलसंस्थाया हृल्लेखायाः कपोलयोः " इत्यस्य साध्यादीन् आवेष्ट्य स्थितायाः इति साम्प्रदायिकैरर्थो वर्णितः सङ्गच्छते । एतद्बलादेव साधकपदस्यापि ह्रींकारोर्ध्वावयवमध्य एव लेखो युक्तः । तेन हृल्लेखाशिखरमध्ये साधकः, पादयोर्मध्ये साध्यः, कुक्षौ वश्यादि, हृल्लेखाकपोलसंलग्नभागद्वये कुरुपदद्वयमिति वक्ष्यमाणपक्षेषु केषांचिदिहैव पर्यवसानात् ।

" अधरे साध्यनामार्णं साधकस्योत्तरे लिखेत् ।
अन्तराग्निश्रियोः कर्म साधकांशे समालिखेत् ॥ "

इति वचनं तदप्येतदर्थकमेव । साध्यं साध्यायाः क्रियाया वाचकं कुरु कुरु इति पदं वर्तुलसंस्थायाः साध्यादिवेष्टनयोग्यतया स्थूलायाः कपोलयोः पार्श्वयोः अधरे हृल्लेखाऽधोभागे । साधकस्य नामार्णमित्यनुकर्षेणान्वयः । उत्तरे उच्चतरे शीर्षे । अग्निश्रियोः रेफेकारयोः । अन्तर्मध्ये । क्रियायाः कारकभूतं वशादिपदं इह कर्मपदेनोच्यते, न तु क्रिया । साधकांशे मध्यभागादीषदूर्ध्वभागे इति तदर्थात् । अथवा—

" तच्छक्तिरेफभागे तु साध्यानामान्तरं लिखेत् ।
तुरीयस्वरभागे तु साधकस्य वशं कुरु ।
साध्यस्योपर्यसंस्पृष्टं लिखेत् सर्वत्र सिद्धये ॥ " इति ।

अन्तरं सावकाशम् ईकारस्य भागे साधकस्य नाम । वशं कुरु कुरु इति पदत्रयमपि साध्यस्योपरि, इत्यन्वयः । **इत्येकः पक्षः** । " बीजान्तःसाधकं साध्यं पृष्ठेऽधः कर्मवाचकम् " **इत्यपरः** । बीजमध्ये चैत्रं बीजपृष्ठे देवदत्तं बीजाधः क्रियापदसहितमेवेत्यर्थः । " बीजान्तर्वा प्रयोगस्य सकलस्यैव लेखनम् " । **इतीतरः पक्षः** । इति यथासम्प्रदायं व्यवस्था वेदितव्या ।

वस्तुतस्तु, नैते चत्वारः पक्षाः । अपि तु

" बीजान्तर्वा प्रयोगस्य " इति वचने वाशब्दबलात् स एवैको भिन्नः पक्षः । इतर द्वयं त्वस्मल्लिखितप्रथमपक्षान्तर्गतमेव । तथा हि तच्छक्तिरेफभाग इत्यस्य हृल्लेखापादयोर्मध्ये इत्यर्थः । तुरीयस्वरभागो हि न रेफसमीपभागः । नागरान्ध्रादिबहुषु लिपिषु तुरीयस्वरद्योतकरेखायाः शिखराकारायाः शिरस्येव लेखात् ।

**प्रपञ्चसारसङ्ग्रहे** भुवनेशीषड्गुणितयन्त्रप्रकरणे भुवनेश्या उपरिभागे ईकारांश इति स्पष्टमुक्तत्वाच्च । तेन हृल्लेखाशिरोभागे शिखरितं साधकनामेत्यर्थः । साध्यस्योपर्यसंस्पृष्टमि-

त्यस्य असंस्पृष्टपदमहिम्ना वशपदं साध्योपरि ह्लेखाकुक्षौ तत्पार्श्वयोः ह्लेखाकपोलसंलग्न-भागयोः साध्यादुपरिस्थयोः कुरुपदद्वयमित्यर्थः। बीजान्तः साधकमिति तृतीयपक्षसाधक-वचनेऽपि बीजान्तर्बीजशिखरान्तरित्यर्थः। साध्यं पृष्ठे इत्यर्थ साध्यपदं कुरुकुर्विति पदवाचकम्। साध्यं वर्तुलसंस्थाया इति श्लोके **प्राचीनै**स्तथा व्याख्यानात्। पृष्ठपदं ह्लेखाकपोलपरमेव। तत्समीपदेशत्वात्। अधः साधकाधः। कर्मवाचकं वशमिति पदम्। अधः ह्लेखापादावयव-मध्ये। कर्मवाचकं देवदत्तमिति साध्यपदमित्यर्थः। तस्मात् शिखरमध्ये "चैत्रस्य मम" इति, पादयोरन्तर्देवदत्तमिति, गर्भे वशमिति कपोलयोः कुरुकुरु इति **पक्ष एकः**। ह्लेखागर्भ एव पाङ्क्ततयोक्तवाक्यस्य लेख इति **अन्यः**। इति द्वेधैव विकल्पो, न तु चतुर्धेति प्राचीनैरिव भ्रमितव्यमिति दिक्।

मन्त्रयन्त्रस्येति समाहारद्वन्द्वः। मन्त्रगायत्री यन्त्रगायत्री चेत्यर्थः। तत्र मन्त्रगायत्री तत्तन्मन्त्राङ्गभूता विशेषतस्तत्र तत्र पठ्यमाना। यथा सौरविषये—

भास्कराय विद्महे, महद्द्युतिकराय धीमहि।
तन्न आदित्यः प्रचोदयात्॥ इति।

एवमन्यविषये च तत्र तत्र द्रष्टव्या। यत्र तु विशिष्य मन्त्रगायत्री नोक्ता तत्र—

मन्त्रराजाय विद्महे महामन्त्राय धीमहि।
तन्नो मन्त्रः प्रचोदयात्॥

इति सामान्यमन्त्रगायत्री ग्राह्या। **तन्त्रान्तरे** तु अत्रत्यद्वितीयचरणो वरप्रदाय धीमहीत्युद्-धृतो दृश्यते। तेन अनयोर्मन्त्रगायत्र्योर्विकल्पः। यन्त्रगायत्र्यप्येवमेव द्वेधा विकल्पिता पठनीया। मन्त्रपदस्थाने यन्त्रपदघटिता। यत्र विशिष्य अष्टदलादिकं विहितमस्ति तत्र एकैकस्मिन् पत्रे अक्षराणां त्रयं त्रयं लेख्यम्।

"विशिष्याष्टदलादौ तु गायत्रीलेखनं स्मृतम्।
वर्णास्तु यन्त्रगायत्र्याः प्रतिपत्रं त्रिशस्त्रिशः"॥

**इति वचनात्**। यन्त्रेति मन्त्रस्योपलक्षणम्। अत्र तृतीयदल एव मकारादिः। पञ्चमदल एव यधीम इति। अष्टमदल एव चोदयात् इति। नियमाविरोधेनैवाक्षराणां न्यूनाधिकभाव-स्थलेऽपि विभाग ऊह्यः। यथा अत्रैव प्रथमदले भास्करा इत्यक्षरत्रयम्। द्वितीयदले यवि इत्यक्षरद्वयम्। यद्वा प्रथमदले भास्क इत्यक्षरद्वयम् द्वितीयदले रायवि इति त्रयं इति विकल्पः। यत्र तु द्व्यक्षरमेव देवस्य नाम यथा कृष्णायेति, तत्र प्रथमदले अक्षरद्वयमेव। न पुनर्विकल्पे-नाक्षरत्रयम्। समं स्यादश्रुतत्वादिति न्यायात्। सामान्यगायत्र्यां यकारस्या द्वितीयदल एव लेखः इत्यस्य क्लृप्तत्वाच्च। एवमेव सामान्यगायत्र्यां क्लृप्तस्याक्षरस्थलस्याविरोधेनैव विभाग-

कल्पनोह्या । चतुर्थदले ह्युतिक इति । पञ्चमे तु रायधीम इति चतुश्चतुर्वर्णाः । सप्तमदले आदित्यः प्र इति चत्वारः इत्यादिकमन्यत्राप्यूह्यम् ।

यत्र तु द्वादशदलमेव, तत्र द्वयं द्वयं षड्दले, चतुश्चतुरश्चतुर्दले षट् षडिति विभज्य लेखः। प्रथमपङ्क्तौ मन्त्रगायत्रीं विलिख्य तदधो यन्त्रगायत्रीं तेनैव क्रमेण लिखेत् । यत्र तु षोडशदलमेव तत्र प्रथममष्टदलेषु मन्त्रगायत्रीवर्णास्त्रिशस्त्रिशो विलिख्य अवशिष्टेषु नवमादिदलेषु यन्त्रगायत्रीवर्णांस्त्रिशस्त्रिशो विलिखेत् । यत्र तु न सर्वथा अष्टदलान्यतमं कमलं विहितमस्ति, तत्र अष्टदलस्य मनसैव स्थलं प्रकल्प्य तत्रोक्तक्रमेण वर्णान् लिखेत् । "अनपायो हि कालस्य लक्षणं हि पुरोडाशौ" इति **जैमिनिसूत्रे** कालपुरोडाशपदयोर्देशपत्राद्युपलक्षणत्वस्योपलक्षणापायेऽप्युपलक्ष्यानपाय इति न्यायसिद्धत्वेन **भाष्यकारादि**भिस्तथा व्याख्यानाकरणेऽपि दोषाभावात् ।

प्राणस्थापनको मनुः प्राणप्रतिष्ठामन्त्रः । स च पूर्वोक्त एव । परन्तु यन्त्रस्य प्राणा इह प्राणा इत्यादिरीत्या ममेति पदस्थाने यन्त्रस्येति पदघटितः । स च यथावकाशं लेख्यः—

"अग्रे रेखावकाशेषु प्रतिष्ठां प्राणदां लिखेत्" इत्युक्तेः । प्राणप्रतिष्ठामन्त्रेण मातृकाभिश्च वेष्टनेऽप्रादक्षिण्येन वर्णा लेख्या इति तु सम्प्रदायः । तेन व्युत्क्रमलेखनं फलति । अत एव ज्ञापकात् गायत्र्योरक्षरत्रयस्य प्राग्दले तावत् अप्रादक्षिण्येन लेखे सिद्धे उपस्थितक्रमत्यागे मानाभावात् तदुत्तराक्षरत्रयमपि तस्माल्लेखस्य दक्षिणदल एव लेख्यं, न पुनस्तद्दलस्य उत्तरदले । एवमन्यत्रापि । अत एव श्रीचक्रे कामेश्वर्यादिनित्यानां अकाराद्यक्षरसाहित्यवत्त्वादनेनैव क्रमेणार्चनमित्यूह्यम् ।

भूतबीजानि हां यां रां वां लां इत्याकारकाणि पञ्चमहाभूताक्षराणि । अथवा ये च भूतानां वर्णाः भूतशक्तिपूजायां प्रसिद्धाः ते च कर्मभेदेन व्यवस्थिताः—

"कर्मभेदाद् भूतभेदसम्भूतार्णानपि न्यसेत्" ॥ इति **वचनात्**। यथा शान्तौ आकाशवर्णाः । ऌ ॡ अं ङ ञ ण न म श ह । उच्चाटनमारणयोर्वायुवर्णाः । अ आ ए क च ट त प य ष । रक्षायामग्निवर्णाः । इ ई ऐ ख छ ठ थ फ र क्ष । वश्ये आरोग्ये च आप्यवर्णाः । ऋ ॠ औ घ झ ढ ध भ व स । स्तम्भने पार्थिववर्णाः । उ ऊ ओ ग ज ड द ब ल ळ । एतेषां स्थलानुक्तेः प्राणप्रतिष्ठालेखनस्थलस्य पूर्वमुपस्थितत्वात् विस्तृतत्वाच्च यावद्विशेषदर्शनं अत्र नैव लेखः । अथवा भूतदिक्पालबीजानीति द्वन्द्वावगतसाहित्यबलात् **श्रीमेरुतन्त्रादाव**पि च तत्साहित्येन व्यवहारदर्शनात् 'अणुरपीति' न्यायेन भूतबीजानि इन्द्रादिदिक्चतुष्के पञ्चममुत्तरस्यामेव । "अन्ते तु बादरायण" इति न्यायात् । भूतार्णलेखस्तु दशदिक्षु । तत्रापि पूज्यपूजकयोर्मध्ये प्राचीति सर्वत्र । दिक्पालादौ तु "यथास्थितैव" इति न्यायोऽत्रापि तुल्य

इति तत्साहचर्याद्भूतार्णानामपि तथैव लेखः। यत्र त्वेकं वर्णं प्राच्यां लिखितं वर्णान्तरमपि प्राच्यामेव लेखनीयत्वेनापतति ततः पूर्वलिखितवर्णादाग्नेयविभागे तल्लेख्यं, न पुनरीशानभागे। आग्नेय्याः प्राच्यामन्तर्भावस्य चान्यतः सिद्धत्वेनेहापि तस्याकाङ्क्षावशाद् ग्रहणेन अनियमपरिहारस्यैवोचितत्वात्। पौर्वापर्ये विनिगमनाविरहस्तु आर्षवचनेष्वङ्गपरिगणनाक्रमस्य प्रयाजेषु ब्राह्मणक्रमानुसरणन्यायेनाश्रित्य कर्तव्यः। यत्र तन्त्रभेदेन व्युत्क्रमेणापि परिगणनं दृश्यते तत्र विकल्पस्य न्यायसिद्धत्वेऽपि सम्प्रदायाद्व्यवस्था।

एवं च प्रकृते यद्यपि भूतार्णप्रथमस्य लकारादेः प्राच्यामादौ लेखस्तदाग्नेयभागे दिक्पालबीजप्रथमस्य लकारस्येत्यापद्यते। 'भूतदिक्पालबीजानि' इत्युक्तवचनात्, तथाऽपि भूतार्णस्थलनिर्णयस्य दिक्पालबीजस्थलनिर्णयोत्तरकालिकत्वेन उपक्रमन्यायप्राबल्यात् आदौ लकारस्तदाग्नेय एव लंकारादिर्लेख्यः। उक्तन्यायस्तु यत्रोभयोर्मिथोऽपेक्ष्यो वाचनिकः स्थलनिर्णयस्तद्विषयः। न चैवं सति जीवबीजसाध्यपदयोर्मध्यबीजादधोलेखने विनिगमनाविरहः **प्राचां मते** आपादितो न सङ्गच्छेतेति वाच्यम्। प्राच्यादिदिग्रूपदेशस्य विस्तृतत्वेन तत्रोभयोरधिकानां वा लेखने समुच्चयोपपत्तावपि मध्यबीजापादानकाधोभागस्याल्पतरत्वेन तत्र विकल्पस्य दुर्वारत्वादित्यादि न्यायविद्भिरूहनीयम्।

अत्रेदमास्तिकैकवेद्यमतिरहस्यम्। लेख्याक्षराणामन्येषां वाऽङ्गानां क्वचिद्वचनात् क्वचिन्न्यायेन च निर्णीतत्वेऽपि न्यायानां प्रबलन्यायान्तरापोह्यत्वेन तर्काप्रतिष्ठानाच्च चरमस्यानपोह्यस्य न्यायस्य वचनमस्य वा निखिलतन्त्रदर्शिसर्वज्ञकपरिच्छेद्यत्वेन विहितान्यस्थलेऽन्यार्णमिति वक्ष्यमाणवचनाद् बिभ्यद्भिः सम्भावितनिखिलदोषपरिजिहासुभिः यन्त्रे यथावकाशं परमशिवस्य महाविष्णोर्वा नामधेयं लेखनीयमिति दिक्।

दिक्पालबीजानां यन्त्रहृदयमिति संज्ञा। तानि च बहिर्भागे तत्तद्दिशि लेख्यानि—

"हृदयाख्या दिगीशार्णास्तत्तद्दिक्ष्वष्ट बाह्यतः।" **इत्युक्तेः**। तानि च लं रं हं षं वं यं सं शं इति। **क्वचिच्च** लं रं मं क्षं वं यं सं हं इति। **अन्यत्र** लं रं क्षं वं टं यं सं हं इति कुत्रचिच्च प्रोक्तानीति तेषां विकल्पः।

"आग्नेयमक्षरं दिक्षु रक्षायै यन्त्रबाह्यतः।" इत्यपि **क्वचित्**। आग्नेयाक्षरं रमिति।

**॥ इति यन्त्राङ्ग–विंशतिकम् ॥**

तथा—

अनुग्रहे बहिर्वक्त्रा निग्रहेऽन्तर्मुखाक्षराः।
इतरेषामशेषाणां तिर्यग्वक्त्रः प्रशस्यते॥

क्रमवक्त्रस्तथा सौम्ये व्युत्क्रमः क्रूरकर्मणि।
नानामुखेषु यन्त्रेषु प्रशस्यन्ते बहिर्मुखाः।
यन्त्रभेदार्णरेखाणां अशेषाणामयं विधिः॥

तथा—

यन्त्रनिर्माणसमये रेखाऽऽन्यत्र गता यदि।
सत्फलं न फलत्येव चिरायासजपादपि॥
विहितान्यस्थलेऽन्यार्णं यदि मोहेन वा लिखेत्।
अन्यथा सिद्धिमाप्नोति देहजाड्यमथापि वा॥
विहिताक्षरजालेषु लुप्तमेकाक्षरं यदि।
न पूर्णसिद्धिमाप्नोति साक्षाच्छिवसमोऽपि वा॥
मन्त्राक्षरविलोपेन कर्तुरायुःक्षयो भवेत्।
आलस्यं बीजलोपेन साध्यलोपात्क्रियाक्षयः॥
यन्त्रपीठस्य सङ्कोचादव्यक्ताक्षरलेखनात्।
अक्षराणां मिश्रणाच्च अन्यथा भवति ध्रुवम्॥
समावकाशफलकात् सुव्यक्ताक्षरलेखनात्।
सर्वयन्त्राणि सिध्यन्ति साक्षाच्छिववचो यथा।
तस्मात्समाहितो भूत्वा प्राज्ञो यन्त्रं समालिखेत्॥

एतच्च लेखनं साधकस्य चन्द्रताराबलान्विते दिने। वश्याद्यभिचारयोस्तु साध्यस्याष्टमराश्यादावपि।

एवं प्रकारेण यन्त्रलेखनोत्तरं हृल्लेखाया यन्त्रस्य साध्यस्य साधकस्य च पृथक् पृथक् प्राणप्रतिष्ठापूर्वकं षोडशभिरुपचारैः अर्चनं कार्यम्। प्राणप्रतिष्ठामन्त्रे साध्यसाधकादिनाम्नामुल्लेखः कार्यः। ततो मूलमन्त्रोत्तरं अनेन मन्त्रेण चैत्रमारोग्यवन्तं कुरु कुरु इत्यादि तत्तत्प्रयोगानुसारेण वाक्यरचनया तद्वाक्यमायोज्य अष्टोत्तरशतवारं तद्यन्त्रं अभिमन्त्र्य तान्त्रिकविधिना मूलमन्त्रेण सहस्रवारं शतवारं वा हुत्वा प्रतिहोमं स्रुवं यन्त्रे सम्पातयेत्। सम्पातो नाम होमोत्तरं स्रुवेण यन्त्रस्पर्शः। एवं प्रतिहोमं संपातसाधितं कुर्यात्। तेन यन्त्रसिद्धिः।

धारणयन्त्रेऽप्येतावत्कृत्वा घुटिकां बद्ध्वा पट्टसूत्रवेष्टनादि कुर्यात्।

"यन्त्रं विलिख्य घुटिकां बद्ध्वा सूत्रेण वेष्टयेत्।
लाक्षयाऽऽच्छादितं स्वर्णे रौप्ये ताम्रेऽपि वा क्षिपेत्॥

सम्पुटे प्रक्षेपस्त्वग्निसम्बन्धं विना कार्यः ।

"मूर्ध्नि बाहौ गले वाऽपि धारयेदिष्टसिद्धये ।
जन्ममासे च जन्मर्क्षे जन्मवारे विशेषतः ।
मतिमान् पूजयेद्यन्त्रं यन्त्रेशप्रीतिवृद्धये ॥

अत्रेदं बोध्यम् । अङ्गानां प्रधानोपकरणत्वेनैव फलवत्त्वेन भाव्यन्तराकाङ्क्षाया इव तल्लोपस्यापि तदभावफलकत्वादेव अनिष्टान्तरस्य अपेक्षितत्वात् पूर्णतान्यायेन आयुःक्षयादिस्मृतिरर्थवादः । सत्फलाभावस्य पूर्णसिद्ध्यभावस्य च स्मृतिर्न्यायप्राप्तानुवादः । रेखाया अन्यत्र गमनेऽपि तां प्रमार्ज्य पुनर्लेखनमपि न्यायसिद्धमेव । कलियुगे शकुनादेरत्यन्तादरस्य निषेधस्तु ग्रन्थान्तरेषु स्पष्ट एवेति भगवत्स्मरणादिपूर्वं वा पुनर्लेखनमारभेतैव । अव्यक्ताक्षरलेखनादेरनिष्टफलकत्वस्मरणं तु मन्त्रोच्चारणनिष्ठाव्यक्तत्वजन्यानिष्टश्रवणतुल्यन्यायत्वात निषेधोन्नायकम् । लेखके अभ्यासशीलत्वविशेषणमध्ये तन्निषेधभयादेव न लेखनाधिकारितावच्छेदकत्वेन विवक्षितम् । अत एव नापर इति न पृथङ्निषेधः । तेन कदाप्यलिखितयन्त्रोऽपि निपुणबुद्धिर्लिखेदेव ।

एवं विहितार्णस्थले वर्णान्तरलेखनस्य निषेधोन्नयनम् । वर्णानां बहिर्मुखत्वादयो लेखन्या जातिभेदा अपि गुणफलाधिकारन्यायेन स्वार्थतात्पर्यका एव । "स्नातः शुक्लाम्बरधर" इत्यादयो लेखकसंस्काराः । यन्त्रधर्तरि त एव श्रुताः फलसंस्काराः । लुप्तमेकाक्षरं यदीत्यत्र एकत्वमविवक्षितम् । "न पूर्णसिद्धिमाप्नोति" इति तु प्रमादाद्यत्किञ्चिदङ्गलोपेऽपि न सर्वथा नैष्फल्यमिति ज्ञापयति । "योऽर्थज्ञ इत् सकलं भद्रमश्नुते" इत्यस्य वेदार्थज्ञानाभावतः शब्दमात्राध्ययनशालिनोऽपि किञ्चित्फलास्तित्वज्ञापकतायाः समञ्जसत्वात् । यन्त्रे लिखिताक्षराणां तु यन्त्रस्वरूपघटकत्वात् हृल्लेखाप्राणप्रतिष्ठादिसम्पुटप्रक्षेपान्तास्तत्संस्काराः । सम्पातसाधनान्तानामपि स्वरूपघटकत्वसम्भवात् । यूपादिवदिष्टसंस्कारगणात्मकत्वं वा सुवचम् । "धारयेदिष्टसिद्धये" इति तु प्रधानविधिः । तादर्थ्यचतुर्थ्या इष्टपदेन च फलवत्त्वश्रवणात् । जन्ममासादौ पूजनं सौत्रामणिवदुत्तमाङ्गम् । पूजाधिकरणयन्त्रस्य तु पूजाङ्गत्वम् । पूजैव तत्र प्रधानम् । देवताप्रीत्यर्थमेवेति तु तान्त्रिकसिद्धान्तज्ञत्वादिकं तु न्यायविद्भिरूहयितुं शक्यम् ।

सञ्चाराद्बहुदेशानां रोगैर्बहुभिरर्दितः ।
रसायनानि भूयांसि सिषेवे वत्सरत्रयम् ॥
अमोघैरपि तैस्तेषां न च लोमाप्यमीयत ।
तदा भास्कररायोऽस्तौद्भास्करं लोकभास्करम् ॥
बाह्यान्तरतमोजाड्यरोगपातकघातकम् ।
स्मृतमात्रः कर्मसाक्षी धियमेतामचोदयत् ॥

तृचार्घ्यदानतो रोगाः प्रणङ्क्ष्यन्त्यचिरादिति ।
स मुमूर्षुदशापन्नोऽप्यारेभे सद्य एव तत् ॥

द्वितीय एव दिवसे किञ्चिदुल्लाघतां गतः ।
दशमे दिवसे सर्वे रोगास्तस्य लयं गताः ॥

इदमत्यद्भुतं दृष्ट्वा ये प्रत्याख्यातभास्कराः ।
भिषजस्ते भेषजानि व्यर्थान्येवेति मेनिरे ॥

ततः कालेन महता तृचेनाराधयन् रविम् ।
नानाविधाः समालोच्य शतशस्तृचपद्धतीः ॥

बहूनामुपकाराय निश्चकर्ष स्वया धिया ।
ज्ञानतोऽज्ञानतो वाऽपि दोषाः सन्त्यत्र यद्यपि ॥

न ते दोषत्रयघ्नस्य प्रभावाद्दूषणक्षमाः ।
हंसत्वादपि सूर्योऽस्माद्गुणानेव ग्रहीष्यति ॥

अहो माया ! जगत्सर्वं व्यामोहयति यद्गदैः ।
सचक्षुषोऽपि पीड्यन्ते प्रत्यक्षे भास्करे सति ॥

प्रत्यक्षेणैव निर्णीतो भास्करेणैव भास्करः ।
धीचोदो गदहा चेति गायत्र्याप्येतदुच्यते ॥

आग्रहायणिकमासि कीलके
वत्सरे धवलपक्षपक्षतौ ।
भास्करेण तृचभास्करः कृतो
भास्करावधि स जीवतु क्षितौ ॥

॥ इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणसर्वतन्त्रस्वतन्त्र-
श्रीमद्गम्भीरराजभारतीदीक्षितात्मजभास्कररायोन्नीतः
तृचभास्करः सम्पूर्णतामगमत् ॥

[ श्री शके १६३० कीलकनाम संवत्सरे मार्गशीर्ष शुद्ध प्रतिपत्तिथौ
तृचभास्करः पूर्णतामगात् ]

॥ इति शिवम् ॥

# APPENDIX I

**अथ श्रीतृचभास्करे ग्रन्थकृता स्पष्टतया निर्दिष्टानामन्यग्रन्थानां नामानि ।**

*N.B.* : The words are given here in the order of their first occurrence in the text.

# APPENDIX II

Alphabetical list of Vedic Ṛks occurring in Tṛcabhāskara

| Ṛk. | | Ṛ.V. | Tṛc. Page |
|---|---|---|---|
| अग्निं दूतं वृणीमहे | | १.१२.१ | ८२, १०३ |
| अदृश्रमस्य केतवो | | १.५०.३ | १०४ |
| अप त्ये तायवो यथा | | १.५०.२ | १०३ |
| अप्सु मे सोमो | | १.२३.२० | ८१ |
| अयुक्त सप्त शुन्ध्युवः | | १.५०.९ | ११० |
| आ कलशेषु धावति | | ९.१७.४ | ९६ |
| आदित्प्रत्नस्य रेतसो | | ८.६.३० | ८२ |
| आ वात वाहि भेषजं | | १०.१३७.३ | ८२ |
| इमं मे गङ्गे यमुने | | १०.७५.५ | ९५ |
| उदुत्यं जातवेदसं | | १.५०.१ | १०३ |
| ओषधयः संवदन्ते | | १०.९७.२२ | ९६ |
| काण्डात्काण्डात्प्ररोहन्ती | | Y.V.१३.२० | ९७ |
| गणानां त्वां गणपतिं | | २.२३.१ | ७८ |
| गन्धद्वारां दुराधर्षां | Ṛ.V. Khila | ५.८७.९ | ९६,९९ |
| जातवेदसे सुनवाम | | १.९९.१ | ७८ |
| तत्त्वा यामि ब्रह्मणा | | १.२४.११ | ९६ |
| तरणिर्विश्वदर्शतो | | १.५०.४ | १०४ |
| नमो महद्भ्यो नम | | १.२७.१३ | ७९ |
| प्र णो देवी सरस्वती | | ६.६१.४ | ७८ |
| प्रत्यङ् देवानां विशः | | १.५०.५ | १०४ |
| प्र वो यज्ञेषु देवयन्तो | | ७.४३.१ | ९६ |
| मही द्यौः पृथिवी च न. | | १.२२.१३ | ९६ |
| या ओषधीः पूर्वा जाता | | १०.९७.१ | ९६ |
| याः फलिनीर्या अफला | | १०.९७.१५ | ९७ |
| येभ्यो माता मधुमत्पिन्वते | | १०.६३.३ | ७८ |
| एवा पित्रे विश्वदेवाय | | ४.५०.६ | ७८ |
| रुवति भीमो वृषभः | | ९.७०.७ | ९६ |
| विद्यामेषि रजस्पृथ्व | | १.५०.७ | १०४ |
| सप्त त्वा हरितो रथे | | १.५०.८ | ११० |
| स हि रत्नानि दाशुषे | | ५.८२ ३ | ९७ |
| स्योना पृथिवी | | १.२२.१५ | ८१ |
| हिरण्यरूपः सः | | २.३५.१० | ९७ |
| क्षेत्रस्य पतिना वयं | | ४.५७.१ | ७८ |




आग्नेयमक्षरं रं रक्षायै यन्त्रबाह्यतः ॥

हृदयाख्या दिगीशार्णास्तत्तद्दिश्यष्ट बाह्यतः ॥ ते च

लं रं हं षं वं यं सं शं इति क्रमेण ॥

दिक्पालबीजानां यन्त्रहृदयम् इति संज्ञा ॥

कर्मभेदात् भूतार्णाः चक्रे लेख्याः ॥ ते तु यथा ।

शान्तौ आकाशवर्णाः ऌ ॡ अं ङ ञ ण न म श ह ॥

उच्चाटनमारणयोः वायुवर्णा अ आ ए क च क च ट त प य ष ॥

रक्षायामग्निवर्णाः इ ई ऐ ख छ ठ थ फ र क्ष ॥

वश्ये आरोग्ये च आप्यवर्णाः ऋ ॠ औ घ झ ढ ध भ व स ॥

स्तम्भने पार्थिववर्णाः उ ऊ ओ ग ज ड द ब ल ळ ॥

॥ अथवा भावनैव लेखः ॥

**॥ इति श्रीतृचभास्करग्रन्थान्तोक्तयन्त्रसामान्यविध्यनुसारं**

**सौरयन्त्रस्य प्रतीकम् ॥**